# त्रिंशच्छ्लोकी
## पट्टाभिरामटीकासहिता

# Trimśacchloki
with
# Paṭṭābhirāma's Tīkā

EDITED BY

PANDITARĀJA RAMA PISHAROTI
*Ernakulam,*

AND

PANDIT V SUBRAHMANYA SASTRI,
*Sanskrit Department, Annamalai University*

UNDER THE INSTRUCTIONS OF

MR K R PISHAROTI M A,
*Sanskrit Department, Annamalai University*



PUBLISHED IN

THE ANNAMALAI UNIVERSITY JOURNAL,
ANNAMALAINAGAR

1937

*Price Eight Annas*

## FOREWORD

This brochure contains the text of a comparatively recent Sanskrit work called the *Trimsacchlōki*—(*thirty Ślokas*)—*by an unknown author* and a commentary thereon by Paṭṭabhirama The commentator Paṭṭabhirama may be assigned to the latter half of the nineteenth century A D He is also the author of a commentary called *Manjusa* on the *Nyaya siddhanta muktavali* by Visvanatha Pancanana In his *Manjusā* Pattabhirama refers in several places to Nīlakantha the author of the well known commentary on Annambhaṭṭa s *Dipika* called *Prakasika* Nīlakanṭha died in 1840 A D So Paṭṭabhirama cannot be earlier than 1840 A D He is one of the disciples of Nrsimha Śastri who is the author of a commentary called *Prabha* on the *Muktavali* and also of a commentary called *Narasimha prakasika* on Annambhaṭṭa s *Dipika* Paṭṭabhirama wrote also commentaries on the *Tarkasamgraha* and the *Dipika* (See the Madras Balamanorama Press edition of the *Muktavalī* with commentaries )

Gautama the sutra kara of the Nyaya darsana expounded methodically the basic principles of the dialectic and ratiocinative machinery of the Nyaya system This machinery was amplified perfected and refined by Gangesopadhyaya of Mithila of the thirteenth century by Raghunatha siromani of the sixteenth century and later in the seventeenth century by Jagadisa and Gadadhara The dialectic literature of the later Nyaya is a vast banian tree which had its roots struck deep and its huge trunk fully developed in Mithila in the *Tattvacintamani* had its immense foliage stretched out and ramified in the *Didhiti* in Nuddea and bore fruit in the rich fruitage of Jagadisi and Gadadhari which formed the colossal monument of Indian dialectics in the seventeenth century Perched high on such broad based and ever growing dialectic eminence the Nyaya dialecticians of the recent centuries have been carrying on their Śāstraic discussions and making all their contributions to Śastraic thought in Sanskrit Paṭṭabhirama Śastri is one of these recent Naiyayikas

In the *Trimsacchloki* and in its commentary in particular the precise significance of certain types of Sanskrit expression which are frequently used in polemical literature in Sanskrit is considered with reference to appropriate illustrations and elucidated The types of Sanskrit expression considered in this work are —

'न चेति ... ... वाच्यम्'; 'इति'; 'अस्ति'; 'नास्ति'; 'वाच्यम्'; 'ननु'; 'चेत्'; 'यद्यपि तथापि'; 'यदि तदा', 'आपत्तिवाचथे लिङादिः'; 'अवाच्यत्वम्'; 'अयुक्तत्वम्'; 'सन्'; 'आकारः'; 'मध्ये'; 'अपेक्ष्य'; 'वर्जयित्वा'; 'एकम्'; 'यद्वा', 'अथवा', 'परंतु'; 'एव'

It may be observed here that Pattābhirāma Sāstri and other members of the fraternity of Nyāya dialecticians look upon language as fixing the boundaries of thought. In the never-ending fight between speech and thought, these dialecticians carry on their interpretative function, with the firm belief that the language of Nyāya can be so far perfected and refined as to turn out to be an unfailing lasso, which never misses its mark when thrown into the firmament of thought and successfully catches specific types of thought in its nooses and exhibits them within certain well-defined limits —with the firm conviction that the language of Nyāya is a perfect and efficient instrument, which helps to summarise, classify and analyse the results of thinking, however vagarious, tantalising and elusive thinking itself may be In this connection, it may be well to ponder over these epigrams —

"Thought is language minus sound"
"Language is thought plus sound"

The manuscript of this work was made available by Panditarāja Rāma Pisharoti of Ernakulam, Cochin As instructed by Mr K R Pisharoti, M A, formerly of the Sanskrit Department of this University, Panditarāja Rāma Pisharoti of Ernakulam and Pandit V Subrahmanya Sāstri of the teaching staff of the Sanskrit Department in this University prepared the press-copy of this work and scrutinised the proofs, when this work was published in the Annamalai University Journal

This work is now made available separately in book-form, with a detailed table of contents in Sanskrit prepared by Pandit V Subrahmanya Sāstri and with this foreword by—

Mahāmahopādhyāya PROF S KUPPUSWAMI SASTRIAR,
M A, I E S (*Retired*)

Annamalai University,
Annamalainagar,
Dated, 23—12—37

# सटीकायाः त्रिंशच्छ्लोक्या विषयानुक्रमणिका



# त्रिंशच्छ्लोकी

## (पट्टाभिरामकृतटीकासहिता)

आम्नायमौलिषु विचक्षणमानसेषु
न्यग्रोधसीम्नि पुरतश्च दृशोर्ममैकम् ।
यद्वस्तु वास्तवमनस्तमितप्रबोध-
माशास्महे तदिदमद्भुतशक्ति किंचित् ॥ १ ॥

सिद्धान्ता परमभ्यधायिषत ये श्लोकैरिह त्रिंशता
तानेतान् विशदीकरोमि न ततो दोषो गुणो वापि मे ।
सिद्धान्तो यदि वा तदन्यविषय सम्पद्यता तावता
श्लाघामूलकृतोऽथवा परिभवो राज्ञो यथा सैन्यत ॥

वक्ष्यमाणार्थाना प्रामाणिकत्वमुपपादयन् प्रयोजनप्रदर्शनपूर्वकं निरूपणं प्रतिजानीते ।

मू० स्वानुभूत्येकशरणा विषया: पूर्वपक्षिणाम् ।
उच्यन्ते तत्तत्रार्था: श्लोकैर्द्वात्रिंशता मया ॥ १ ॥

नन्वेतन्निग्रहनिरूपणस्य किं प्रयोजनमत आह—विषया इति ॥ पूर्वपक्षिणां विदुषां सभासु पूर्वपक्ष पातयताम् । विषया: पर्यनुयोज्यतया रहस्यत्वेन गोपनीया इत्यर्थ ॥ नन्वस्य पदस्य कोऽर्थ इति पूर्वपक्षं पातयन्तं प्रति त्वया वक्तव्यमिति यदि वादिन पर्यनुयुञ्जीरन् तदा किं वक्तव्यमत आह—स्वेति ॥ तदा विलक्षण-मुखविकारभ्रूकौटिल्यशिर कम्पहस्तचेष्टादिभिरभिनीयमानानुभवैकप्रमाणतयाऽयमर्थोवक्तव्य इत्यर्थ ॥ १ ॥

मू० न चेति वाच्यं बोधोऽत्र विषयः पूर्वपक्षिणाम् ।
बहवो बहुधा तत्र वादिनः सम्प्रचक्षते ॥ २ ॥

अत्र एषु मध्ये ॥ २ ॥

मू० व्यवहृत्यमानताभेदनन्युग्गातूक्तिभाङ्कृतः ।
विशेष्योऽर्थ इतः पूर्वविशेष्यस्यं विशेषणम् ॥ ३ ॥

अत्र प्रथममुदाहरणवाक्यार्थं परिष्कृत्य अनन्तरं श्लोकार्थं उच्यते । अत्रोदाहरणम्——नच पाषाणे गन्धवत्त्वं नास्तीति वाच्यम्; तत्रापि पृथिवीत्वेन गन्धानुमानात् । इति ॥ पाषाण इति सप्तम्यर्थो निरूपितत्वम् । वृत्तित्वमसधात्वर्थं । आख्यातार्थश्चाश्रयत्वम् । नञर्थश्चाभाव । पाषाणनिरूपितवृत्तिताश्रयत्वाभाववान्गन्ध इति नास्त्यन्तार्थं ।

ननु असधातुना किं सामान्यतो वृत्तित्वं प्रतिपाद्यते, उत सम्बन्धविशेषावच्छिन्नवृत्तितात्वरूपेण । नाद्य ; कालिकसम्बन्धेन गन्धस्यापि पाषाणवृत्तित्वात् । न द्वितीय ; असधातोर्नानार्थकत्वापत्ते । अथ वृत्तितात्वमेवासधातुशक्यतावच्छेदकम् । प्रकृते तु संबन्धविशेषावच्छिन्नत्वेन लक्ष्यते । अथवा समवायेनेत्यादिसम्बन्धबोधकतृतीयान्तपदमध्याहर्तव्यम् । तदवच्छिन्नत्व तृतीयान्तार्थो वृत्तित्वेऽन्वेतीति चेन्न, तथा सति सामान्ये समवायेन गुणो नास्तीति वाक्यस्याप्रामाण्यापत्ते । सामान्यनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धे ॥ अथ सामान्ये समवायेन गुणो नास्ति; पाषाणे समवायेन गन्धो नास्तीत्यादौ सामान्यनिरूपितत्वस्याभावो वृत्तित्वे बोध्यते । न तु तन्निरूपितवृत्तित्वस्याभावो गुणादौ, अतो नानुपपत्ति । न च सामान्यादौ गुणवत्ता गुणादौ सामान्यसमवेतत्व वा सन्दिहान पुमांसं प्रति तादृशवाक्यप्रयोगात् तादृशसन्देहविरोधिबोधजनकत्व तस्यावश्यकम्, तच्च न सम्भवति । सामान्यानिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वनिश्चयेऽपि सामान्यनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वसन्देहस्यापि सम्भवात् । सामान्यानिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य गुणत्वावच्छेदेनान्वय स्वीकृत्य तादृशवाक्यस्योक्तसंशयनिवर्तकत्वमपि न सम्भवति । तादृशनिश्चयेऽपि एक एव गुण सामान्यादन्यत्र सामान्ये च समवेतस्स्यादिति सम्भावनाया अनिरासेन पूर्वोक्तसन्देहनिवर्तकत्वासम्भवात् इति वाच्यम् । सामान्यनिरूपितत्वाभावस्य गुणनिष्ठसमवायसम्बन्धावच्छिन्नवृत्तितात्वावच्छेदेनान्वय स्वीकृत्य तादृशसन्देहनिवर्तकत्वोपपादनसंभवात् । गुणनिष्ठसमवायसम्बन्धावच्छिन्नवृत्तितात्वावच्छेदेन सामान्यानिरूपितत्वनिश्चये सति सामान्ये गुणाभावनिश्चयस्याप्यौचित्यानर्जनीयतया तत्संशयाभावादिति चेन्न । एवमप्याकाश सामान्ये समवायेन नास्ति इति वाक्यस्याप्रामाण्यापत्ते, सामान्यानिरूपितस्यापि समवायावच्छिन्नवृत्तित्वस्य गगने बाधात् । यत्तु सामान्ये समवायेन गगन नास्तीति

वाक्यस्य प्रामाण्योपपत्तये तत्र नञर्थस्य वारद्वयं भानमङ्गीकृत्य सामान्यानिरूपितसमवायसंबन्धावच्छिन्नवृत्तिताभाववत् गगनं इति बोधं स्वीकुर्वन्ति ; तन्मन्दमिव प्रतिभाति । अविलक्षणानुपूर्वीस्थले बोधवैलक्षण्यस्य संप्रदायविरुद्धत्वात् ; पृथिव्यां समवाये न गन्धो नास्तीति वाक्यस्य प्रामाण्यापत्ते , जले समवायेन गन्धो नास्तीति वाक्यस्याप्रामाण्यापत्तेश्च, तादृशवाक्यजन्यशाब्दबोधस्य सामान्यादिविशेष्यकसमवायादिसंसर्गकगगनादिप्रकारकसंशयविरोधित्वानुपपत्तेश्च ।

अलोच्यते । "सामान्ये समवायेन गुणो नास्ति", "सामान्ये समवायेन गगनं नास्ति" इत्यादिवाक्यानामप्रामाण्यमिष्टमेव । परन्तु तादृशवाक्यजन्यो भ्रमात्मक एव शाब्दबोध सन्देहनिवर्तक । नचैतत्सकलग्रन्थकारमतविरुद्धमिति वाच्यम् । "आकाशं न पश्यति चैत्र", 'आकाशं न पश्यति जात्यन्ध " इत्यादिवाक्यानां शशशृङ्गं नास्तीतिवाक्यतुल्ययोगक्षेमतयाऽप्रामाण्यमभ्युपगच्छता गदाधरभट्टाचार्येणापि तद्वाक्याप्रामाण्यस्याभिप्रेतत्वे बाधकाभावात् ॥ यत्तु भूतले घटो नास्तीत्यत्र घटाभावो भूतलवृत्तिरिति नञर्थमुख्यविशेष्यकबोध समवायेनेति तृतीयान्तार्थं तदवच्छिन्नप्रतियोगिताकत्वमभावान्वयी । तथा च सामान्ये समवायेन गगनं नास्तीत्यत्र समवायसंबन्धावच्छिन्नप्रतियोगिताकगगनाभाव सामान्यनिरूपितवृत्तित्वाश्रय इति बोधसम्भवान्नानुपपत्तिरिति । तन्न । तथापि भूतले घटो न समवैतीत्यत्र कीदृशो बोध ? । न तावद्घटाभावो भूतलवृत्तिरिति । समवेत्युपसर्गद्वयपूर्वकेण्धातो समवायसम्बन्धावच्छिन्नवृत्तित्वार्थकतयाऽनुभवाधीनत्वेन घटाभावस्य भूतलासमवेतत्तयाऽप्रामाण्यापत्ते । न च तत्र भूतलसमवेतत्वाभाववान् घट इति बोध इति वाच्यम् । तथा सति सामान्ये गगनं न समवैतीति वाक्यस्याप्रामाण्यापत्ते । न च त्वयैव मयापि तादृशवाक्यस्य प्रामाण्यं नाभ्युपेयत एव सामान्ये समवायेन गगनं नास्तीति वाक्यस्य प्रामाण्यमेवास्माकमाग्रह इति वाच्यम् । न समवैतीत्यस्य समवायेन नास्तीति वाक्येन विवरणस्य सकलग्रन्थकारसम्मतत्वेन सामान्ये गगनं न समवैति सामान्ये गगनं समवायेन नास्तीति वाक्ययो पर्यायतया तयोरेकतरस्य प्रामाण्यमपरस्याप्रामाण्यमित्यर्द्धजरतीन्यायहेयत्वात् ॥ यत्तु भूतले घटो नास्तीत्यत्र भूतलान्वितसप्तम्यर्थविशेषितप्रतियोगिताभावस्यासधात्वर्थप्रतियोगितायाम वयात् भूतलवृत्त्यभावप्रतियोगी घट इति बोध । समवायेनेत्यादितृतीयान्तार्थमन्वदवच्छिन्नत्व प्रतियोगित्वान्वयि । न समवैतीत्यत्र तु समवायसंबन्धावच्छिन्नप्रतियोगित्वमेव धात्वर्थ । इत्थं च सामान्यवृत्त्यभावीयसमवायसंबन्धा-

वच्छिन्नप्रतियोगिताया गगने सत्त्वान्न काप्यनुपपत्तिरिति । तदशुद्धम् । नञ्समभिव्याहारे यत्पदार्थस्य यत्पदार्थे येन सम्बन्धेनान्वय, तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाव तद्विशेषणतया बोद्धव्ये नञेति व्युत्पत्तिविरोधात् । भूतले घटो नास्ति किन्तु पट इत्यत्रानुषज्यमानस्य अस्तीत्यस्य वृत्तित्वबोधकत्वानुपपत्तेश्च । अनुषज्यमानपदानामन्तरेणानुपपत्तिप्रतिसन्धान पूर्वविरुद्धार्थबोधकत्वस्यौत्सर्गिकतोऽनुभवविरुद्धत्वात् ॥

परे तु भूतले समवायेन घटो नास्तीत्यत्र नञ्समभिव्याहृतासधातोरभावोऽर्थ । युक्तश्चैतत् । भू सत्तायामस भुवि इत्यन्योन्यार्थविवासभूय'तू विहितौ । तत्राभाव इत्यत्र नञ्समभिव्याहृतभूधातोरभावार्थकतया तत्पर्यायस्य नञ्समभिव्याहृतासधातोरपि तदर्थकत्व वाच्यम्। अत एव भूतले घटो न भवतीत्यत्र न भवतीत्यस्य नास्तीत्यनेन विवरण सगच्छते । प्रतियोगित्वमाख्यातार्थ । समवायेनेत्यत्र तृतीयान्तार्थस्तदवच्छिन्नप्रतियोगिताकत्व धात्वर्थान्वयि । न समवैतीत्यत्र तु समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव नञ्समभिव्याहृतधातोरर्थ । अतो न काचिदनुपपत्तिरिति प्राहु ॥

अत्र केचित् पूर्वपक्षयन्ति—एतत्कल्पेऽपि नञ्समभिव्याहार इत्यादिनियमभग । भूतले घटो नास्ति किन्तु पट इत्यत्रानुषज्यमानास्तीत्यस्य वृत्तित्वबोधकत्वानुपपत्तिश्च समान । अथ स्वभावतो वृत्तित्वार्थकस्य नञ्समभिव्याहारदशायामभावार्थकतामापन्नस्याप्य यत्रानुषज्यमानस्य वृत्तित्वार्थकत्वमुपपद्यते । स्वभावतो वृत्तित्वार्थकत्वात्। अभावार्थकतातात्पर्यग्राहकस्य नञ तदानीं तत्राभावात् । न च पूर्वत्रासधातो प्रतियोगित्वार्थकतातात्पर्यग्राहकस्य नञस्तदानीमभावादनुषज्यमानास्तीत्यस्य वृत्तित्वबोधकत्वमस्तीति वाच्यम् । न हि चय तात्पर्यग्राहकसमवधानासमवधानाभ्यामस्तेरभावार्थकता वृत्तित्वार्थकता चाचक्षाणा परमते तदसभवमापादयाम , येन तुल्यता स्यात् । किन्तु पूर्वत्रैकार्थप्रतिपादकस्यान्यत्रानुषज्यमानास्तीत्यस्य शक्त्या लक्षणया वान्यार्थबोधकत्वमनुभवविरुद्धमित्येव । अन्यथा गगाया घोष , न मत्स्य इत्यत्रापि स्वरसतो बोधापत्ते । न च त्वन्मतेऽपीद तुल्यम् । भूतले घटस्य न भाव , किन्तु पटस्येत्यत्र नञ्विनिर्मोकेणानुषज्यमानभाव इत्यस्य स्वरसतो वृत्तित्वबोधकत्वानुभवेन नञ्समभिव्याहारदशायामभावार्थकतामापन्नस्य नञ्विनिर्मोकेणानुषज्यमानस्य स्वरसतो वृत्तित्वबोधकत्वव्युत्पत्ते स्वीकारात् । न च प्रतियोगित्वार्थकतामापन्नस्याप्यन्यत्रानुषङ्गे तथा स्वीक्रियते प्रमाणाभावात् । घटस्य भूतले वर्तमानाभावप्रतियोगित्व, किन्तु पटस्येत्यस्य प्रमाणत्वापत्तेश्चेति चेन्न तथापि न वर्तत इत्यस्य वृत्तित्वाभावबोधकत्व न स्यात् । नास्तीत्यस्य न वर्तत इत्यनेन विवरणात्, तयो समानार्थकत्वात् ।

तथा चानुभवविरोध. । सामान्ये समवायेन गगनं न वर्तत इत्यस्याप्रमाणतापत्तेः । इष्टापत्तावर्द्धजरतीयन्याय इति ।

तदनालोचनविजृंभितम् । यत एतन्मते नञ्समभिव्याहृतवृत्तिलार्थकधातूनामभावार्थकत्वं नञर्थाभावविशेषणतापन्नवृत्तित्वार्थस्त्वङ्गीभयमेव स्वीक्रियते । तात्पर्यवशाच्चैकैकबोध । यत्र चैकार्थे बाधकं तत्रापरार्थमादायैव प्रामाण्यमुपपादनीयमिति न काचिदनुपपत्तिरित्यलं विस्तरेण ॥

तथाच पाषाणनिष्ठाभावप्रतियोगी गन्ध. इति बोध. । इतिपदस्य गन्धनिष्ठपाषाणनिष्ठाभावप्रतियोगित्वमर्थ । वाच्यमित्यत्रण्यत्वेन रूपेण विधिशक्तस्य कृत· प्रामाण्ये लक्षणा । तदन्वितनञर्थस्य वचिधात्वर्थेऽन्वय । पुन कृत्यत्वेन रूपेण कृता विषयो बोद्धव्ये । तथाच गन्धनिष्ठपाषाणनिष्ठाभावप्रतियोगित्वमप्रमाणोक्तिविषयीभूतमित्यन्वयबोध । उक्तिश्च श्रावणोपस्थितत्वात्पाषाणे गन्धवत्त्वं नास्तीत्यानुपूर्विकैव । तत्रापीत्यादेश्च पृथिवीत्वज्ञानजन्यतद्विशेष्यकगन्धप्रकारकानुमितेरित्यर्थ । अपिशब्दस्वारस्यात्पाषाणे गन्धस्यालौकिकप्रत्यक्षविषयत्वं प्रतीयतेऽनुभवात्, तस्यापिशब्दार्थस्य तत्पदार्थेऽन्वयात् तदन्तर्भावेण तच्छब्दार्थकल्पनाद्वा उपपादनीयम् । अनुमानादित्यत्र पञ्चम्यर्थ प्रयोज्यत्वमप्रामाण्यान्वयि । तथा चेद सर्वमेकं वाक्यम् । नन्वत्र गन्धनिष्ठपाषाणनिष्ठाभावप्रतियोगित्वे उद्देश्ये अप्रमाणोक्तिविषयताविधेयकबोधो न संभवति । तादृशोद्देश्याप्रसिद्धे । नचास्य वाक्यस्य तदंशेऽप्रामाण्यमिष्टमेव, अभिनिवेशप्रयुक्तत्वादिति वाच्यम् । तथापीतिपदार्थविशिष्टाप्रसिद्धे । न ह्यसतिवस्तुनि कस्यचिद्वृत्ति संभवति । न च इतिपदाद्गन्धस्य पाषाणनिष्ठाभावप्रतियोगित्वस्य च खण्डशो भानमिति वाच्यम् । तथाप्यत्रैकवाक्यताबलादितिपदार्थे गन्धे पूर्वपदार्थस्य गन्धस्यान्वयो वाच्य । स च व्यर्थ । नच पाषाणनिष्ठाभावप्रतियोगित्वमेव इतिपदार्थ । तत्र गन्धस्याधेयतयान्वय । तावतैव विशेष्यस्थं विशेषणमिति वाक्यार्थोपपत्तेरिति वाच्यम् । तावतापि सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति न्यायेन धर्मितावच्छेदकांशे भ्रमत्व न सम्भवतीतिचेत्, मैवम् । रजतत्वेन शुक्तिज्ञानानन्तरं रजतत्वेन शुक्तिधर्मितावच्छेदकीकृत्य रजतमानयमितिवाक्यात् भ्रमात्मकबोधस्य सर्वानुभवसिद्धतया तादृशनिश्चयासिद्धेरिति ॥

श्लोकार्थन्तु, ण्यता ण्यत्प्रत्ययेन । लक्ष्या लक्षणावृत्या बोद्धया, या मानता प्रामाण्यं तस्या भेद्यः स्वप्रतियोगिकत्वसंबन्धेन विशेष्य नञ्

नञर्थोऽभाव । तेन युज्यते अनुयोगितासम्बन्धेन विशेष्यतया अन्वीयते, या धातूक्तिः वचिप्रतिपाद्योक्ति । तद्वाजः तद्विशेष्यस्य । कृतः इदर्थविषयस्य । इति-शब्दपूर्ववाक्यात् यादृशविशेष्ये यादृशविशेषण बोद्धव्ये तादृशविशेषणरूपोय इत्यर्थ । स विशेष्य इति । अत्र पाषाणनिष्ठाभावप्रतियोगित्वस्य वारद्वय भान त्वनुभवबलादाम्नीयते। नास्तीत्यत्र तिङर्थस्योद्देश्यतावच्छेदकघटकतया भानमितिशब्दप्रभावकल्पितन्युत्पत्तिसक्तो-चादूहनीयम् ॥ अथवा पाषाण नास्तीति पदत्रय तात्पर्यग्राहकम् । इतिशब्दार्थे पाषाणनिष्ठाभावप्रतियोगित्वे गन्धस्यान्वयाद्विशिष्टलाभ इत्यादिक स्वयमूहनीयम् ॥ ३ ॥

इतिशब्दस्य मुख्यविशेष्यार्थबोधकस्य नेत्याशयेन पक्षान्तरमाह—

मू० आचष्टे प्राग्विशेष्य वा तद्विशिष्टविशेषणम् ।

गन्धवत्त्वपद गन्धनिष्ठपाषाणनिष्ठाभावप्रतियोगित्वपरम् । तत्र नच वाच्यमित्यस्या-न्वय । बोधाकारस्तु पूर्ववत् । पाषाणनिष्ठाभावप्रतियोगित्वस्य वारद्वय भानादिक तु पूर्ववत् ॥ नन्वत्रगन्धवत्त्वपदस्य गन्धनिष्ठपाषाणनिष्ठाभावप्रतियोगित्वरूपविशिष्टार्था प्रसिद्धि । न च गन्धवत्त्वपदात् गन्धस्य पाषाणनिष्ठाभावप्रतियोगित्वस्य च खण्डशो भानमिति वाच्यम् । तर्हि गन्धवत्त्वपदात् गन्धस्य शक्त्या पाषाणनिष्ठाभावप्रतियोगित्वस्य च लक्षणया भानोपगमस्य युगपद्वृत्तिद्वयविरोधेनासभवादिति चेत्, न। परस्परान्वय-बोधस्थले युगपद्वृत्तिद्वयस्याभ्युपगमात् । अयमेव वा पक्षान्तरानुसरण बीजम् ॥

श्लोकार्थ —पूर्वविशेष्यवाचकपद तादृशविशेष्यनिष्ठ विशेषणमाचष्टे बोधयतीति ॥

मू० विशेषणान्वितोवच्याद्यर्थस्तत्र विशेषणम् ॥ ४ ॥

पाषाण नास्तीत्यनेन पाषाणनिष्ठाभावप्रतियोगित्वमुच्यते । प्रतिपादकत्वमिति शब्दार्थ । पाषाणनिष्ठाभावप्रतियोगित्वप्रतिपादकत्वमेव वा इतिशब्दार्थ । पाषाणे नास्तीतितु तात्पर्यग्राहकम् । तथा च गन्धवत्त्व पाषाणनिष्ठाभावप्रतियोगित्वप्रतिपादका प्रमाणोक्तिविषयीभूतमित्यन्वयबोध । श्लोकार्थस्तु— विशेषणान्वित पूर्वविशेषणान्वित, तत्प्रतिपादकत्वोक्तिविशेष्यकृदर्थविषय । पूर्वविशेष्ये विशेषणमिति ॥ ४ ॥

नन्वत्र पक्षे न च पाषाण गन्धो नास्तीति वाच्यमिति प्रयोगानुपपत्ति । पुल्लिंग गन्धशब्दप्रतिपाद्येऽभेदसबन्धेनान्वितमर्थं बोधयत विशेष्यनिघ्नस्य वाच्यपदस्य नपुसकत्वा नुपपत्तेरित्यस्वरसादाह ।

मू० अथवाऽस्मिन् पूरणीयं सामान्येनेदमादिकम् ।
विशेष्य तु तदर्थः स्यात्प्रायशो वा विशेषणम् ॥ ५ ॥

पाषाणे गन्धो नास्तीति भिन्न वाक्यम् । इति वाच्यमित्यनयोस्तात्पर्यग्राहकत्वम् । तथाचेदमिति न वाच्यमित्यन्वय । इदशब्दस्य गन्धवाचकत्वेऽपि उत्सर्गतो नपुसकत्वम् इतिशब्दस्य पाषाणनिष्ठाभावप्रतियोगित्वमतिपादकत्वमर्थ । शेषाकारस्तु पूर्ववत् ।

श्लोकार्थस्तु—अस्मिन् वाक्ये । सामान्यत इदशब्दादिकमध्याहर्तव्यम् । तादृशेदंशब्दार्थस्तु पूर्वविशेष्यम् । ननु अध्याहृतेदशब्दस्य गन्धार्थकत्वे पुस्त्वानुपपत्ति । नचोत्सर्गत पदाना नपुसकत्वमिति वाच्यम् । यत्पदप्रतिपाद्यार्थपरामर्शकत्वमिदमादीना यत्र तत्र तेषा तत्समानलिङ्गकत्वस्यैवाभियुक्तसम्मतत्वेन तादृशनियमस्य स्वपरामृश्यमानार्थबोधकपदान्तरासमवधानविषयत्वादित्याशयनाह—प्रायशो वा विशेषणमिति । तथा चेदंशब्दस्य पाषाणनिष्ठाभावप्रतियोगित्वमर्थ । तदर्थकपुलिङ्गपदान्तरसमवधानाभावात्प्रकृते नपुसकत्वम् । इतिशब्दस्य गन्धनिष्ठत्वप्रतिपादकत्वमर्थ । तथा च पाषाणनिष्ठाभावप्रतियोगित्व गन्धनिष्ठत्वप्रतिपादकाप्रमाणोक्तिविषयीभूतमित्यन्वयबोध । ननु नच गन्धस्य पाषाणसबन्धाभाव इति वाच्यमित्यत्राध्याह्रियमाणेदशब्दस्य विशेषणीभूतगन्धपरामर्शकत्व विशेष्यभूतपाषाणसबन्धाभावपरामर्शकत्व वा न संभवति । उभयोरपि पुस्त्वादत आह—प्रायश इति । तत्र तुल्यविधिवेद्यतया उत्तरकालीनमानसेन वा लभ्यस्य पाषाणसबन्धाभावाधिकरणत्वस्य गन्धवृत्तित्वस्य वा परामर्शकमिदमादिपदमिति भाव ॥ ५ ॥

अध्याहार विनाप्याह—

मू० अथवा पूर्वलक्ष्योक्तितादात्म्येत्यर्थभागिनः ।
भावान्तार्थस्य वचसो नञप्रामाण्यमेयता ॥ ६ ॥

पाषाणे गन्धो नास्तीत्येक पदमनुकरण विलक्षणानुपूर्वीविशिष्टतादृशवाक्यपरम् । अभेद इतिशब्दार्थ । वाच्यमित्यत्र कृत्यप्रत्ययो भावार्थकत्वाद्यर्थ । तद-

त्तस्य वचेरुक्तिरर्थः । तदर्थस्त्वप्रामाण्यम् । तथा च तादृशानुपूर्वीविशिष्टाभिन्नं वाक्यमप्रमाणमिति बोधः ॥

श्लोकार्थस्तु—इतिशब्दपूर्वेण पाषाणे गन्धो नास्तीति पदेन लक्ष्या योग्या या उक्तिः तादृशानुपूर्वीविशेषविशिष्टा तस्या यत्तादात्म्यं अभेदः तद्रूपो यः इत्यर्थः विशेष्यतया तदन्वितस्य भावप्रत्ययान्तवचिधात्वर्थस्य वाक्यस्य तदर्थप्रामाण्यविशेष्यत्वमिति ॥ अत्र च पाषाणे गन्धवत्त्वं नास्तीति वाच्यमित्यत्र पाषाणनिष्ठाभावप्रतियोगित्वादिबोधस्तु न साक्षात्, किन्तु पाषाणे गन्धवत्त्वं नास्तीति वाक्यात्तादृशवाक्यस्योपस्थितौ तदुत्तरकालीन इति भावः ॥ ६ ॥

ननु पाषाणे गन्धवत्त्वं नास्तीत्यादिशब्दार्थकरच्यादिसमभिव्याहारस्थले सेयं रीतिः संभवति, ननु ज्ञानविशेषबोधकमननशक्यादिस्थले मन्तव्यं शक्यमित्यादौ इत्यतस्तत्साधारणीं रीतिमाह—

मू० विशेष्यत्वादिना भेयान्वयी बोध इतेर्बलात् ।
भावान्तवचिमन्यादिप्रतिपाद्योऽप्रमेति वा ॥ ७ ॥

गन्धवत्त्वपदस्य गन्धविशेष्यकत्वमर्थः । तस्य वच्याद्यर्थे ज्ञानेऽन्वयः । तत्र वचिधात्वर्थः शाब्दबोधः । मनधात्वर्थो मानसबोधः । शकिधात्वर्थः स्वोक्तार्थविशेष्यकाप्रामाण्यप्रकारकबोधः । तत्रगन्धवत्त्वादिपदार्थस्य गन्धविशेष्यकत्वादेरन्वयः । अथवा-गन्धवत्त्वपदस्य गन्ध एवार्थः । तस्य विशेष्यत्वादिसम्बन्धेन ज्ञानेऽन्वयः । तिङन्तार्थस्य पाषाणनिष्ठाभावप्रतियोगित्वस्य प्रकारितासम्बन्धेन तत्रान्वयः । अथवा—पाषाणे गन्धवत्त्वं नास्तीति तात्पर्यग्राहकम् । पाषाणनिष्ठाभावप्रतियोगित्वप्रकारतानिरूपितगन्धनिष्ठविशेष्यत्वमितिशब्दार्थः । तस्य ज्ञानेऽन्वयः । तदर्थस्त्वप्रमात्वमिति ॥

श्लोकार्थस्तु—विशेष्यित्वादिसम्बन्धेन गन्धादिरूपविशेष्यसम्बन्धी यः भावप्रत्ययान्तवचिमन्यादिप्रतिपाद्योऽर्थः बोधः स अप्रमेति वा । न च पाषाणे गन्धवत्त्वं नास्तीति वक्तुं युक्तं शक्यमुचितमित्यादौ भावे तुमुन् । इत्युक्तिर्न युक्तेत्यर्थः इति

समदाय । तत्र युक्तत्वानुचितत्वे अप्रमात्वरूपे । अशक्यत्व तु साधकशून्यत्वमिति विवेक ॥

इदानीं प्रसङ्गादितिशब्दप्रभावमाह—

मू० लक्षणा चैकवाक्यत्वं विपयत्वविपर्ययः ।
व्युत्पत्तीनां च संकोच इतिशब्दस्य वैभवः ॥ ८ ॥

यथा पूर्वोक्तस्थल एव गन्धवत्त्वपदस्य गन्धविशेष्यकत्वार्थे लक्षणा विभिन्नतिङा-दिघटितत्वाद्भिन्नवाक्यत्वप्रसक्तावपि एकवाक्यत्व गन्धवत्त्वपदस्य मुख्यविशेष्यताप्रयोजक-प्रथमान्तपदत्वसत्त्वेऽपि तदर्थस्य प्रकारत्व नामार्थयो साक्षाद्भेदान्वयस्याव्युत्पन्नत्वेऽपि व्युत्पत्तिसङ्कोचात्तथान्वयबोध इत्यादि । एवमन्यत्राप्यूह्यम् ॥ श्लोकार्थस्तु स्पष्ट ॥ ८ ॥

मू० संबोधनं ग्रन्थकृतो ननोरर्थ उदीरितः ।
अन्वेति च यथायोग्यं कर्मत्वेन ततस्ततः ॥ ९ ॥ x

उदाहरणञ्चास्य—ननु मङ्गल विघ्नध्वस प्रति वा समाप्तिं प्रति वा न कारणम् । विनाऽपि मङ्गल नास्तिकादीना ग्रन्थेषु समाप्तिदर्शनात्—इति । विनापदस्याभावसामानाधिकरण्यमर्थ । मङ्गलमित्यत्र द्वितीयार्थ प्रतियोगित्वम्, तस्य विनापदार्थैकदेशाभावेऽन्वय, सम्बन्धिकत्वात् । विनापदार्थस्य चरमवर्णरूपसमाप्तावन्वय । ग्रन्थेष्वित्यत्र घटकत्व सप्तम्यर्थ । वर्णेषु चरमत्व च स्वघटितग्रन्थघटकवर्णप्रागभावासमानकालीनत्वम् । तस्या दर्शन ज्ञानम्, ज्ञाप्यत्व पञ्चम्यर्थ । अन्वयश्चास्य कारणभेदे वाकारद्वयसमभिव्याहृतस्य समाप्तिपदस्य विघ्नध्वससमाप्त्यन्यतरदर्थ । यत्तु विघ्नध्वसपदस्य विघ्नध्वससमाप्त्यन्यतरार्थकत्व समाप्तिपदस्य वा स्यादित्यत्र विनिगमनाविरहाद्विघ्नध्वससमाप्त्यन्यतरत्वावच्छिन्नस्य वारद्वय भान स्यादित्याशङ्क्य प्रथमोपस्थितत्वात्प्राथमिकपदस्यैव लक्षणेति केषाञ्चित्समाधानम् । अन्यथा च यस्मिन्पदे वाकारसमभिव्याहारस्तस्यैव लाक्षणिकत्वम् । वाकारसमभिव्याहारस्य लक्षणातात्पर्यग्राहकत्वात् । उभयत्र वाकारसमभिव्याहारोऽप्रामाणिक । अतो नोभयत्र वाकारसमभिव्याहारस्थलेऽन्यतरत्वावच्छिन्नस्य वारद्वय भानापत्तिरिति च समाधा-नान्तरम् । तदुभयमप्यसमीचीनमिति भाति । तथाहि—एकपदस्योभयान्यतरत्वा

वच्छिन्नोपस्थापकत्वे वाकारसमभिव्याहारस्येव शक्तया स्वोपस्थाप्यैकतरार्थविलक्षणान्यतरत्वावच्छिन्नघटकैकपदार्थोपस्थापकपदान्तरसमभिव्याहारस्यापि ज्ञानं प्रयोजनकम्। अतो विघ्नध्वंसपदस्य प्रथमोपस्थितत्वेऽपि समाप्तिपदश्रवणात्प्रागन्यतरत्वावच्छिन्नोपस्थापकत्वासंभवेन तस्य प्रथमोपस्थितत्वमकिञ्चित्करम्। एवं यस्मिन्पदे इत्यादि समाधानमप्यसङ्गतम्। यत उत्तरपदे वाकारसमभिव्याहारं विना पूर्वपदे वाकारसमभिव्याहारोऽनुभवविरुद्धः। तथाहि—घटं वा पटं वाऽऽनयेति घटं पटं वाऽऽनयेत्येवानुभवसिद्धः प्रयोगः। न तु घटं वा पटमानयेति प्रयोगानुभवः शक्यते नाटयितुम्। तत्र घटं वा पटं वाऽऽनयेत्युभयत्र वाकारसमभिव्याहारस्तेनैव प्रत्याख्यातः। तेन यस्मिन्पदे इत्यादिमन्थार्थपर्यालोचनाया यत्र घटं पटं वाऽऽनयेत्युच्यते तत्र पटपदस्य लक्षणा। यत्र घटं वा पटमानयेत्युच्यते तत्र घटपदस्य लक्षणेत्यर्थः स्वरसतो लभ्यते। स चानुभवविरुद्धः। किन्तु सर्वत्रोत्तरपदस्यैव लक्षणा तत्रैव वाकारसमभिव्याहारः। घटं वा पटं वाऽऽनयेत्यत्र घटपदे वाकारसमभिव्याहारस्तु घटपदं न घटत्वावच्छिन्नोपस्थापकमिति तात्पर्यं ग्राहयति। पटपदे वाकारसमभिव्याहारस्तु पटपदं घटपटान्यतरत्वावच्छिन्नोपस्थापकमिति तात्पर्यं ग्राहयति। नच वैपरीत्ये विनिगमनाविरहः इति वाच्यम्। पूर्वपदे वाकारसमभिव्याहारं विनाप्युत्तरपदे वाकारसमभिव्याहारस्य, उत्तरपदे वाकारसमभिव्याहारं विना पूर्वपदे वाकारसमभिव्याहाराभावस्य च विनिगमकत्वमित्यादिकमालोचनीयम्। विनापीत्यत्रापिशब्दस्वारस्यान्मङ्गलसामानाधिकरण्यमपि सूच्यते। तथाच मङ्गलप्रतियोगिकाभावसमानाधिकरणमङ्गलसमानाधिकरणनास्तिकादिकर्तृकग्रन्थघटकसमाप्तिज्ञानज्ञाप्यविघ्नध्वंससमाप्त्यन्यतरनिरूपितकारणतावच्छेदकवन्मङ्गलमित्यन्वयबोधः। तत्र ननुपदस्य ग्रन्थकारसंबोधनमर्थः। तस्य कर्मतासम्बन्धेन कारणभेदेऽन्वयः। ग्रन्थकारसंबोधनकर्मत्वं नाम ग्रन्थकारसमवेतबोधजनकव्यापारजन्यज्ञानविषयत्वमिति सर्वं सुस्थम्॥ श्लोकार्थस्तु स्पष्टः॥ ९॥

प्रसङ्गाच्चेच्छब्दस्यार्थमाह—

सू० स्वानुमत्यतिपाते तद्विशिष्टे वा विशङ्कने।
जिज्ञासायां क्वचिच्चेत्तद्वन्मता कर्तरि क्वचित्॥ १०॥

उदाहरण चास्य इतिचेन्नेति। तत्र स्वस्यानुमति अभ्युपगमापरपर्यायो ज्ञानविशेष। तस्या अतिपात: अभाव। तदर्थकश्चेच्छब्द। तत्र यत्र चेदित्यनन्तर पृथङ्नञ् श्रूयते तत्र चेत्पदसमभिव्याहृतनञ एवानुमत्यभावोऽर्थ। यत्र पृथङ्नञ्न श्रूयते किंत्वितिचेदित्यव तत्र चेदित्यस्य तदर्थकत्व बोध्यम्। तत्र न कारणमित्यत्र विशिष्टकारण भदस्य प्रकारितासबन्धेन मङ्गलस्य विशेष्यितासबन्धेनानुमतावन्वय, इतिशब्दप्रभावात्। तत्र चेच्छब्दार्थ स्वानुमत्यभाव —स्वनिष्ठानुमत्यभाव। स च नैकदा स्वनिष्ठानुमत्यभावत्वेन विशिष्टरूपेण चेच्छब्देन प्रतीयते। किन्तु स्वनिष्ठत्व विधेयतया, अनुमत्यभावश्चोद्देश्यविधया। तथाच तादृशविशिष्टभेदप्रकारकमङ्गलविशेष्यकानुमत्य भाव स्वनिष्ठ इति विशिष्टबोध। यत्र इति चेदनन्तर पञ्चम्यन्तपद श्रूयते तत्र पञ्चम्यन्तार्थज्ञानज्ञाप्यत्वस्यानुमत्यभावेऽन्वय। केचित्तु तज्ज्ञानप्रयोज्यत्व पञ्चम्यन्तार्थ। तस्य स्वनिष्ठत्वेऽन्वय। प्रयोज्यत्व स्वरूपसबन्धविशेष। प्रतिबद्धयाभावसबन्धप्रतिबन्धकयो प्रयोज्यप्रयोजकभावस्य सिद्धान्तसिद्धत्वात्। प्रकृते शिष्टाचारविषयत्वेन मङ्गलस्य समाप्तिसाधनत्वानुमानादिति यदि स्याचदा तादृशानुमत्यभाव शिष्टाचारविषयत्वज्ञानजन्यमङ्गलविशेष्यकसमाप्तिकारणत्वप्रकारकानुमितिप्रयोज्यस्वनिष्ठत्ववानिति विशिष्टबोध इत्याहु।

प्रकारान्तरेणाह—**तद्विशिष्टे वा विशङ्कन** इति। स्वानुमत्यभावविशिष्टशङ्कायामित्यर्थ। शङ्का स्वोक्तार्थविशेष्यकाप्रामाणिकत्वप्रकारकज्ञानम्। प्रकृते तु केवलज्ञानमेव शङ्का। तत्र स्वानुमत्यभावो नाम प्रतिबद्धयत्वम्, न तु पूर्वोक्त। तत्र नञ एव प्रतिबद्धयत्वमर्थ। चेच्छब्दस्य शङ्कार्थ। तत्र मङ्गलादे विशेष्यिवादिनाऽन्वय। कारणत्वानुमानादित्यत्र पञ्चम्यर्थो निरूपितत्वम्। अन्वयश्चास्य प्रतिबद्धयत्वे। तथा च मङ्गलविशेष्यकयथोक्तभेदप्रकारिका शङ्का निरुक्तानुमाननिरूपितप्रतिबद्धयवाश्रयीभूतेति विशिष्टबोध। यत्रेति चेदित्येव श्रूयते तत्र जिज्ञासेतरार्थकस्थले सर्वत्र नञ्शब्द प्रयोक्तव्य इत्यभिप्रायो ग्रन्थकारस्य। अत्र केचित्पूर्वपक्षयन्ति। इति चेन्नेत्यत्र यदि नञ प्रतिबद्धयत्वमेवार्थ तर्हि तदनन्तर—यत्र पञ्चम्यन्तपद श्रूयते तत्र तदर्थतन्निरूपितत्वविशिष्टप्रतिबध्यत्वप्रकारकबोधसभवेऽपि—यत्र पृथक् पञ्चम्यन्तपद न श्रूयते, किन्त्विति चेन्नेत्यनन्तर शिष्टाचारविषयत्वेन मङ्गलस्य समाप्तिसाधनत्वमनुमीयत इत्येव, तत्र का गति। नहि निरूपका

विशेषितप्रतियोग्यत्वप्रकारकबोधः क्वचित्प्यासिक सन्ननुभूयते । अतोऽयमर्थोऽनुपपन्नइति । अत्रासङ्गात् –यत्र पृथक् पद न श्रूयते तत्राप्यन इति पद्यम्यन्त पदमध्याहार्यमिति–प्राहु । युक्त चैतत् । इति चेन्नेत्यत्र सर्वेव विवरण क्रियते–इतिचेत् । कुन , यत शिष्टाचारविषयत्वेन मङ्गलस्य समाप्तिसाधनत्वमनुमीयते अत इत्यर्थ इति । तस्मादेतद्विवरणपर्यालोचनया अत इत्यादिकमध्याहार्यमेव । अत्रोक्तपक्षद्वयमेकविषयकमेव । विषयान्तरमप्याह—जिज्ञासायां क्वचिदिति । अत्रोदाहरणम्—द्रव्यत्वजातौ किं मानम् ? न तावत्प्रत्यक्षम् , घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादितिचेन्न । कार्यसमवायिकारणतावच्छेदकतया द्रव्यत्वजात्यनुमानादिति । अत्र द्रव्यत्वजातिविषयकप्रमाकरणविषयकजिज्ञासा कार्यसमवायिकारणतावच्छेदकत्वविषयक-द्रव्यत्वजात्यनुमितिज्ञाननिवर्तनीया इति बोध । तादृशानुमितिज्ञाननिवर्त्यत्व कथ द्रव्यत्वजातिप्रमाणजिज्ञासाया इच्छाया विषयसिद्धिमात्रनिवर्तनीयतया प्रमाणजिज्ञासाया प्रमाणसिद्धिमात्रनिवर्त्यत्वादिति चेत् । द्रव्यत्वजातावनुमितिज्ञाने द्रव्यत्वजातिविषयकानुमि-त्यात्मकप्रमाकरणज्ञानस्याप्यौचित्यावर्जनीयतया परम्परयाऽनुमितिज्ञाननिवर्त्यत्वस्य, तस्य विशिष्टानुमितिज्ञानस्यानुमानज्ञानरूपतया साक्षाद्वा तन्निवर्तनीयत्वस्य प्रमाणजिज्ञासाया सत्त्वात् । अत्रानुमानपदमनुमितिज्ञानपरम् । निरूपितत्व पञ्चम्यर्थ । नञर्थस्तु निवर्त्यत्वम् । तस्य चेच्छब्दार्थे जिज्ञासायामन्वय ।

*नन्वत्र जिज्ञासाया द्रव्यत्वजातिप्रमाणविषयकत्व दुर्लभम् । न च मानपदार्थस्य* विषयताविशेषसबन्धेन जिज्ञासैकदेशे ज्ञानेऽन्वयात्तल्लाभ इति वाच्यम् । विचारासहत्वात् । किमत्र किंशब्दार्थविशेषितस्य मानपदार्थस्य विषयतासबन्धेनान्वय , उत किंशब्दार्थस्यापि प्रातिस्विकरूपेण विषयतासम्बन्धेनान्वय , आहोस्विद्द्रव्यत्वजातौ किं मानमित्येक वाक्यम् । तत्र मानविशेष्यकजिज्ञासाविषयप्रकारकाभेदससर्गकबोध प्रथममुत्पद्यते । तत इतिचेदिति श्रवणे तत्र विषयतासबन्धेन मानपदार्थमात्रस्यान्वय इति । नाद्य , जिज्ञासाया द्रव्यत्वजातिप्रमाणमात्रविषयकतया जिज्ञासान्तर्भावेण तद्विषयकत्वाभावात् तद्विशेषि-तप्रमाणविषयकत्वस्य जिज्ञासाया दुर्घटत्वात् । अत एव न द्वितीयोऽपि । नापि तृतीय , इतिशब्दपरिक्षयापत्ते , भिन्नवाक्यतया प्रतीयमानाना वाक्यानामेकवाक्यतासम्पादन-स्येतिशब्दप्रभावत्वेन तद्घटितभिन्नवाक्यै प्रातिस्विकरूपेण बोधासभवात् । यद्यपि जिज्ञासा-

विषयत्वोपलक्षितस्य मानस्य विषयतया ज्ञानेऽन्वय स्वीकृत्यैकवाक्यतापि सघटते । जिज्ञासायाश्चोपलक्षणतया निवेशेन जिज्ञासाविषयकत्वाभावेऽपि न क्षतिरिति वक्तुं शक्यते। तथापि न तावत्प्रत्यक्षं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादित्यस्य भिन्नवाक्यत्वं दुर्वारमेव ।

अत्रायं समाधि । यत्र किंशब्दसमभिव्याहृतनन्वित्यादिग्रन्थोत्तरं इतिचेन्नेति श्रूयते तत्रेतिशब्दपूर्वमेकमेव पदमन्यय विशिष्टतादृशवाक्यपरम् । इतिशब्दार्थस्तु प्रतिपाद्यत्व तस्य चेच्छब्दार्थेऽन्वय । तत्र किंशब्द यद्याशङ्काविषयपर तदा चेच्छब्देनाप्याशङ्काभिधीयते। यदि जिज्ञासाविषयपर तदा चेच्छब्देनापि जिज्ञासाभिधीयते । तत्र द्रव्यत्वजातिविषयकप्रमाकरणं जिज्ञासाविषयीभूतमित्यादिबोधस्तु तादृशपदोपस्थाप्यवाक्यघटकीभूतपदज्ञान इति बोध्यम् ॥

अत्र केचित् प्रत्रमु –निपाताना द्योतकत्वात् अय पक्ष सर्वोऽप्यनुपपन्न । तत्र ननुपदस्य तदर्थविशेष्यत्वेनाभिमतार्थबोधकपदे स्वार्थान्तर्भावेण लक्षणातात्पर्यग्राहकत्वोक्तिसंभवेऽपि चेत्पदस्य तथा वक्तुमशक्यत्वादिति ॥

तन्न, निपाताना द्योतकत्वस्य नैयायिकसिद्धान्तविरुद्धत्वात् । अन्यथा नञ्शक्यतावच्छेदकनिरूपण एवकारशक्यतावच्छेदकनिरूपणं च दीधितिकृता विरुद्ध्येत। अथ निपाताना द्योतकत्वस्य नैयायिकसम्प्रदायविरुद्धत्वे इवशब्दस्य न सादृश्यार्थकत्व , किन्तु सादृश्यप्रतियोगिवाचकपदस्यैव तत्सादृश्यावच्छिन्ने लक्षणेति तत्र ग्रन्थकृता निरूपण तव विरुद्ध्येतेतिचेन्न । तत्र चैत्र इव मैत्र , चैत्रमिव मैत्रमानयेत्यादौ चैत्रमैत्रपदयो समानलिङ्गवचनकत्वानुपपत्तिरूपबाधकप्रतिसंधानेन तथोक्ते । अत एव इवशब्दार्थप्रतियोग्यनुयोगिवाचकपदयोरपि समानवचनकत्वादिना भाव्यमिति व्युत्पत्त्यन्तर स्वीकृत्येवशब्दस्य सादृश्यार्थकता केचिदाचक्षते। स्यादेतत् । निपातार्थस्य मुख्यविशेष्यतया भान नैयायिकसम्प्रदायविरुद्धमिति । नैष दोष । पुरुषे दण्डो नवेति संशयस्य दण्डाभावदण्डोभयविशेष्यतानिरूपितपुरुषवृत्तित्वनिष्ठप्रकारताशालित्वमुपपादयता गदाधरभट्टाचार्येण निपातार्थविशेष्यकत्वस्यापि सूचितत्वादिति । अथात्र पक्षत्रयेऽपि क्वचिद्विशेष्यत्वादिना प्रथमाद्यन्तार्थस्यान्वयबोधार्थं

क्वचित्पूर्वपदेन वाक्यतोऽर्थं च इतिशब्दस्यावश्यकत्वमापतितम्। तथाच यत्रेतिशब्दसमभिव्याहारो नास्ति, यथा आत्मवादे मुक्तावल्यम्—नातिरिच्यते चेन् तर्हि समूहाऽऽलम्बने नीलाकार पीताकार स्यादिति। तत्र का गतिः? अत्र केचित् तत्रापि इतिशब्दोऽध्याहर्तव्य इत्याहु। वस्तुतस्तु चेच्छब्दो द्विविध। यदर्थ एक आशङ्कार्थकोऽपर। तत्र तावत् यत्रेतिशब्दसमभिव्याहारो न दृश्यते तत्र यदर्थक एव चेच्छब्द इत्यवधेयम्॥ तद्देयता कर्तरि क्वचित्। तत्र तच्छब्देनाशङ्का जिज्ञासा चाभिधीयते। तद्विशेष्यत्वं क्वचित्तदाश्रयस्यैव। यथा—शब्दाश्रयत्वेनाकाशस्य कारणत्वे कान्यथासिद्धिरिति चेत्पञ्चमीति गृहाण इति। शब्दाश्रयत्वावच्छिन्नत्वप्रकारेण कारणत्वप्रकारकाकाशविशेष्यकग्रहविरोधिग्रहविषयीभूतान्यथासिद्धिर्जिज्ञासाविषयीभूतेति तत्रेतिपदपूर्वाव्ययारम्भकृतादृशपदोपस्थाप्यवाक्यस्यार्थ। कथमितिचेदित्थम्। शब्दाश्रयत्वेनेत्यनन्तरमितिशब्दोऽध्याहर्तव्य। सदर्थे प्रकारत्वे तृतीयान्तार्थस्य शब्दाश्रयत्वावच्छिन्नत्वस्यान्वय तस्य कारणत्वपदार्थे कारणत्वग्रहेऽन्वय। अथवा-इतिशब्दमनध्याहृत्य तृतीयार्थस्यावच्छिन्नत्वस्य प्रकारितासबन्धेन कारणत्वग्रहेऽन्वयो वाच्य। यद्वा—तृतीयार्थस्यावच्छिन्नत्वस्य कारणत्वग्रहरूपकारणत्वपदार्थैकदेशकारणत्वे स्वरूपसबन्धेनान्वय। नचात्र घटादिक प्रतीत्यस्याध्याहर्तव्यतया शब्दाश्रयत्वावच्छिन्नघटादिनिरूपितकारणत्वाप्रसिद्ध्याऽप्रामाण्यापत्तिरितिवाच्यम्। इष्टापत्ते। अभिनिवेशेनच प्रयोगात्। पक्षत्रयेऽपि विरोधिग्रहविषयत्वस्य सप्तम्यर्थस्यान्यथासिद्धावन्वय इति बहव। तत्र सप्तम्या विरोधिग्रहविषयत्वार्थकत्व न स्वारसिकमिति प्रतिभाति। वस्तुतस्तु कारणत्व इत्यनन्तर सभाव्यमाने सतीति पूरणीयम्। आनुभाविक चैतत्। कान्यथासिद्धिरित्यनन्तर गृहीतव्येति पूरणीयम्। अत एव पञ्चमीति गृहाणेत्युत्तरम्। इदानीं सप्तम्यर्थस्य प्रयोज्यत्वस्य गृहीतव्येत्यत्र तव्यप्रत्ययप्रकृत्यर्थे ग्रहेऽन्वय। तथा च शब्दाश्रयत्वावच्छिन्नत्वप्रकारकसंभावनाविषयीभूतकारणताप्रयोज्यग्रहविषयीभूतान्यथासिद्धि केत्यर्थ। तत्र सभावनाविषयीभूतकारणताप्रयोज्यत्व सविशेषण हीति न्यायेन कारणत्वसभावनाप्रयोज्यत्व एव पर्यवस्यति। अन्यथासिद्धिग्रहेच कारणत्वसभावनाया प्रयोजकत्वमबाधितमेव। कारणत्व संभाव्यैवान्यथासिद्धेर्निरूप्यत्वात्। यद्वा कारणत्वपद पूर्ववृत्तित्वपर तत्सभावनाप्रयोज्यत्वे न कापि विप्रतिपत्तिरित्यादिकमवसेयम्। अत्र चेदन्तार्थस्य तादृशवाक्यप्रतिपाद्यजिज्ञासाया अध्याह्रियमाणत्वमिति

पदार्थेऽन्वय । पञ्चमीत्यत्र विषयत्वमितिशब्दार्थ । तथाचैतादृशवाक्यप्रतिपाद्यजि-ज्ञासाश्रयस्त्व पञ्चमान्यथासिद्धिविषयकज्ञानवान् भूया इति बोध । एव पञ्चमीति गृह्य तामिति यत्र श्रूयते तत्र तादृशवाक्यप्रतिपाद्यजिज्ञासाश्रयत्वत्समवेत पञ्चमान्यथासिद्धि ग्रहो भूयादित्यर्थ । जिज्ञासान्वितस्याध्याहृततृतीयान्तयुष्मच्छब्दार्थस्य तृतीयार्थसमवेतत्व द्वारा ग्रहेऽन्वयादित्यादिकं तत्र तत्र स्वयमूहनीयम् । श्लोकार्थस्तु उक्त ॥ १० ॥

मू० तथापि स्यादबाध्यत्वे यद्यपि स्यादनादर ।
यदि चेषदनिष्टत्वे तदा तज्जन्यवेदने ॥ ११ ॥

**प्रथमस्योदाहरणम्**—यद्यपि स्नेहत्व नित्यवृत्तितया न कार्यतावच्छेदकम् । तथापि जन्यस्नेहत्व तथा बोध्यमिति । अत्र स्नेहत्व नित्यवृत्तित्वप्रयोज्यकार्यतावच्छेदकभेदवदिति बोधे यद्यप्यर्थस्यानादरस्याप्रयोजकत्वज्ञानरूपस्य विषयतया, अप्रयोजकत्वरूपस्य वा स्वरूप-सबन्धेन भेदेऽन्वय स्वीकर्तव्य । अत्र शुद्धस्नेहत्वे कार्यतावच्छेदकभेदो हि जलत्वजात्यसिद्धि-प्रयोजकतयोपन्यस्यते । स च न तथा भवितुमीष्टे । जन्यत्वविशेषितस्नेहत्वस्य कार्यतावच्छेद-कत्वमादाय जलत्वजातिसिद्ध्युपपादनसभवादितिभाव । तदेवाह—तथापि जन्यस्ने-हत्व तथा बोध्यमिति । तथापीत्यस्य शुद्धस्नेहत्वविशेष्यककार्यतावच्छेदकभेदप्रकारकज्ञाना-प्रतिबद्धयत्वमर्थ । तस्य तथा बोध्यमित्यत्र कार्यतावच्छेदकप्रकारकज्ञानेऽन्वय । तथा चा प्रयोजकनित्यवृत्तित्वप्रयोज्यकार्यतावच्छेदकभेदवत् स्नेहत्वमिति प्रथमवाक्यार्थ । स्नेहत्वविशेष्यककार्यतावच्छेदकभेदप्रकारक ज्ञानाप्रतिबध्यकार्यतावच्छेदकत्वप्रकारकज्ञानविष-यीभूत जन्यस्नेहत्वमिति द्वितीयवाक्यार्थ । यत्र बोध्यमिति न श्रूयते किन्तु तथापि जन्यस्नेहत्व कार्यतावच्छेदकमित्येव तत्र निरुक्त ज्ञानाप्रतिबध्यज्ञानविषयत्वपर्यन्त तथाप्यर्थ । तस्य कार्यतावच्छेदकत्वेऽन्वय इत्यादिक द्रष्टव्यम् ।

द्वितीयोदाहरणम्—यदिच हस्तादौ शरीरव्यवहारो न भवति तदाऽन्त्या वयवित्वे सतीति विशेषणीयम् । अत्र नञ्समभिव्याहृतभूधातुनाऽभावोऽभिधीयते । आख्यातेन प्रतियोगित्वम् । ईषदनिष्टत्व यदि चेत्यनेनोच्यते । तच्च बलवद्द्वे-

पाविषयत्वम् । तथाच चरत्वद्द्वेषाविषयहस्तादिनिष्ठाभावप्रतियोगित्वाश्रय शरीरव्यवहार इति प्रथमवाक्यार्थ । द्वितीयवाक्यार्थे इतिशब्दानन्तर अनेनेति पूरणीयम् । तत्र यदि लक्षण इति सप्तम्यन्तलक्षणशब्दमध्याह्रियते । तदा विपूर्वकशिषधातूत्तरस्य भावकर्मणोरित्यधिकारविहितल्युटानीयरप्रत्ययस्य साधुत्वार्थकत्वम् । विपूर्वकशिष्धातोर्घटितत्वमर्थ । लक्षण इत्यत्र सप्तम्यर्थो निष्ठत्वम् । अन्त्यावयवित्वे सतीत्येक पदम् । तादृशानुपूर्वीविशेषविशिष्टवाक्यपरम् । इतिशब्दार्थश्च प्रतिपाद्यत्वम् । अनेनेत्यत्रेदंशब्दार्थो धर्म । तृतीयार्थो निरूपितत्वम् । तथाच सप्तम्यन्तसत्पदसमभिव्याहृतान्त्यावयवित्वपदप्रतिपाद्यान्त्यावयवित्ववैशिष्ट्यरूपो यो धर्मस्तन्निरूपितघटितत्व निरुक्तलक्षणनिष्ठमिति बोध । यदि च लक्षणमिति प्रथमान्तलक्षणशब्दोऽध्याह्रियते, तदा कर्मण्यनीयरप्रत्यय । कर्मत्व च प्रकृते आश्रयत्वम् । तथाचानीयरप्रत्ययार्थस्याश्रयस्याभेदेन लक्षणेऽन्वय । शेष पूर्ववत् । यदि लक्षणवाक्य इति सप्तम्यन्तलक्षणवाक्यशब्दोऽध्याह्रियते, तदाऽन्त्यावयवित्वे सतीत्यव्ययोपस्थापिततादृशानुपूर्वीविशेषविशिष्ट इत्यर्थभेदे, स चाध्याहृततृतीयान्तेदंशब्दार्थवाक्येऽन्वेति । शेष पूर्ववत् । एव लक्षणवाक्यमिति प्रथमान्तलक्षणवाक्यशब्दाध्याहारपक्षेऽप्यूहनीयम् । पक्षचतुष्टयेऽपि कृत्यप्रत्ययत्वेन रूपेणेष्टसाधनत्वमनीयरप्रत्ययार्थ । अन्वयश्चास्य प्रकृत्यर्थे । इष्ट च प्रकृतेऽतिव्याप्तिवारणं बोध्यम् । अत्र लक्षणशब्देन न केवल चेष्टावत्त्वत्वेन रूपेण चेष्टावत्त्वरूपशरीरलक्षणमुपस्थाप्यते । केवलचेष्टावत्त्वस्यान्त्यावयवित्वघटितत्वाभावेन बाधापत्ते । नाप्यन्त्यावयवित्वविशिष्टचेष्टावत्त्वत्वरूपेण तादृशविशिष्टधर्मस्यान्त्यावयवित्वघटितत्वे निर्विवादेन प्रकृतानुपयोगात्तादृशविशिष्टलक्षणे पुनरन्त्यावयवित्वघटनाया इष्टसाधकत्वाभावात् । किन्तु चेष्टावत्त्वघटितलक्षणत्वेन सामान्यत शरीरलक्षणत्वेन वा । एव लक्षणवाक्यशब्देन न केवल चेष्टावत्त्व शरीरत्वमित्यानुपूर्वीविशेषविशिष्टवाक्यत्वेन, नाप्यन्त्यावयवित्वे सति चेष्टावत्त्व शरीरत्वमिति तादृशानुपूर्वीविशिष्टवाक्यत्वेन वा रूपेण लक्षणवाक्यमुपस्थाप्यते । किन्तु चेष्टावत्त्व शरीरत्वमिति वाक्यघटितलक्षणवाक्यत्वेन सामान्यत शरीरलक्षणवाक्यत्वेन वेति बोध्यम् ।

केचित्तु लक्षणशब्देन चेष्टावत्त्वेन रूपेण चेष्टावत्त्वरूपलक्षणमुपस्थाप्यते । विपूर्वकशिषधात्वर्थो विशेष्यत्वम् । शेष पूर्ववत् । युज्यते चैतत् । अन्त्यावयवित्वे

सति चेष्टावत्त्व शरीरलक्षणमि।त ज्ञानेऽन्त्यावयवित्ववैशिष्ट्यनिष्ठप्रकारतानिरूपितविशेष्यताया चेष्टावत्त्वे सत्त्वात्। एव लक्षणवाक्यशब्देन चेष्टावत्त्व शरीरत्वमित्यानुपूर्वीविशिष्टवाक्यत्वेनैव रूपेण लक्षणवाक्यमुपस्थाप्यते । अन्त्यावयवित्वे सति चेष्टावत्त्वं शरीरत्वमिति वाक्य शरीरलक्षणपरमित्याकारकज्ञानेऽन्त्यावयवित्वे सतीति पदस्याव्यवहितोत्तरत्वसंबन्धेन चेष्टावत्त्वं शरीरत्वमिति वाक्य प्रकारतयाऽन्त्यावयवित्वे सतीति वाक्यनिष्ठप्रकारतानिरूपितविशेष्यताया चेष्टावत्त्व शरीरत्वमितिवाक्ये विद्यमानत्वान्न काप्यनुपपत्तिरित्याहु । एतन्मते तादृशविशेष्यतायामतिव्याप्तिवारणरूपेष्टप्रयोजकत्वमक्षतमेवेति ध्येयम् ।

इत्थ च तदेत्यत्र तच्छब्देन शरीरव्यवहारनिष्ठहस्तनिष्ठाभावप्रतियोगित्वमुपस्थाप्यते । विशेषणाना लक्षणघटकत्व विशेषणवाचकपदाना लक्षणवाक्यघटकत्व चातिव्याप्त्यादिवारणप्रयोजकत्वमनिश्चित्यानावश्यकत्वेनाध्यवसीयते । तत्रातिव्याप्तिवारण प्रयोजकत्व तदघटितस्यालक्ष्यसाधारणतामनध्यवसाय न व्यवस्यते । तच्चातिव्याप्तिनिरूपकाधिकरणे लक्ष्यतावच्छेदकशून्यत्वनिश्चय स्यादिति प्रकृते लक्ष्यतावच्छेदकीभूतशरीरव्यवहारविषयत्वस्य हस्तादिनिष्ठाभावप्रतियोगित्वज्ञान तद्घटकत्वज्ञानजनकमित्यादि ॥ ११ ॥

मू० प्रयोज्यत्वेऽपि वा तुल्ययुक्तिकत्वे क्वचिद्भवेत् ।
परिसंभावनाहेतुत्वार्थकत्वं तयोः क्वचित् ॥ १२ ॥

क्वचित् प्रयोज्यत्व तदेत्यत्र दाप्रत्ययार्थ । यदिचार्थस्तु पूर्ववत् । यथा यदिच पर्वते धूमोऽस्ति तदा वह्नि पर्वतेऽस्तीति । तत्र तच्छब्देन धूमनिष्ठपर्वतवृत्तित्वमभिधीयते । दाल्प्रत्ययेन प्रयोज्यत्वम् । अन्वयश्चास्य वृत्तित्वे । वाकारेणात्रापि पूर्वोक्तार्थ एव युज्यत इत्युक्त भवति । क्वचित्तुल्ययुक्तिकत्व दाल्प्रत्ययार्थ । यथा एक पटत्वस्य जातित्वाभाव मनुते । अन्यस्तु घटत्वस्य । तत्र पटत्वजातित्ववादी अपर प्रति प्रत्यवति ष्ठते—यदिच घटत्व जाति तदा पटत्वमपि जातिरिति । अत्रापि यदिचार्थ पूर्ववत् ,

घटत्वद्वेषाविषयत्वस्य तत्राप्यविशिष्टत्वात् । तदेत्यत्र तच्छब्दस्य घटत्वनिष्ठजातित्वमर्थं । तुल्ययुक्तिकत्व दाप्प्रत्ययार्थं जातित्वेऽन्वेति । केचित्तु यदिचेत्यस्य कचित्सभावनार्थकता-माचक्षते यत्र तादृशोऽर्थो वक्तुरपि सम्मत यथा—यदि च घटत्व जातिरित्यत्रैव । तदर्थसभावना च विषयतया जातित्वेऽन्वेति । क्वचित्तदाशब्दस्य हेतुत्वार्थकत्वमपि । हेतुत्व जन्यत्वम् । यदिच तत्र दण्डो वर्तते तदा घटोत्पत्तिरपीति । अत्र तत्पदस्य दण्डोऽर्थं जन्यत्व दाप्प्रत्ययार्थ । तस्य घटेऽन्वय इत्यादिक स्वयमूहनीयम् ॥ १२ ॥

इदानीं मसङ्गवाक्यघटकचशब्दासमभिव्याहृतयदिशब्दार्थं श्लोकद्वयेन स्पष्टयति ।

मू० आहार्यधीर्यदेरर्थः चक्षते केचिदन्यथा ।
तदपिव्याहृतस्यैव तर्हेरर्थान्तरार्थता ॥ १३ ॥ x

व्यापनारोप्यताभेयसंबन्धित्वात्ययाथ तत् ।
समीचीनं न तद्भाति यतो बहु निरर्थकम् ॥ १४ ॥

आहार्यज्ञानविषयत्व यदिशब्दार्थ इति सम्मतम् , यथा —यदि पर्वते वह्निर्नस्यात् तर्हि घूमोऽपि न स्यादिति । अत्र वह्निशब्दार्थान्वितो नञर्थाभावो मुख्यविशेष्य । पर्वतवृत्तित्व तदशे मकार । अथवा—वह्निरेव मुख्यविशेष्य । तदशे पर्वतनिष्ठाभाव प्रतियोगित्व मकार । नञ्समभिव्याहृतासधात्वर्थाभावान्वितप्रतियोगित्वस्य तिङर्थ-त्वात् । आहार्यज्ञानविषयत्व यदिशब्दार्थ , तच्च पर्वतविशेष्यकवह्निप्रकारकज्ञानोत्तरकाली नज्ञानविषयत्वम् । अन्वयश्चासधात्वर्थे । लिङ्त्वेन रूपेण लिङर्थो न विवक्षित । तथाच वन्ह्यभाव पर्वतविशेष्यकवह्निप्रकारकज्ञानोत्तरकालीनज्ञानविषयपर्वतनिरूपितवृत्तित्वाश्रय इति, वह्नि तादृशज्ञानोत्तरकालीनज्ञानविषयपर्वतनिष्ठाभावप्रतियोगीति वा तदर्थ । तर्हि घूमोऽपि न स्यादित्यत्र तर्हीत्यस्य वन्ह्यभावविशेष्यकपर्वतवृत्तित्वज्ञानज्ञाप्यत्व वह्निविशेष्य कपर्वतनिष्ठाभावप्रतियोगित्वज्ञानज्ञाप्यत्व वार्थ । तस्यापि यथायोगमन्वय । अत्र तु लिङ्त्वेन रूपेणापत्तिरर्थ धात्वर्थेऽन्वेति । तथाच वन्ह्यभावविशेष्यकपर्वतवृत्तित्वज्ञानज्ञाप्यं यत् पर्वतवृत्तित्वमापत्तिविषयीभूतं तदाश्रयो धूमाभाव इति, वह्निविशेष्यकपर्वतनिष्ठाभावप्रतियोगि

त्वज्ञानज्ञाप्य य पर्वतनिष्ठाभाव आपत्तिविषय तत्प्रतियोगी धूम इति वा वाक्यार्थ ।

अत्र केचिद्याचक्षते । यदि वह्निर्न स्यादिति वाक्य तात्पर्यग्राहकम्। तत्समभिव्याहृतस्य तर्हिशब्दस्यैवार्थान्तरार्थकत्वमिति । किं तदर्थान्तरमित्याह--व्यापनेति । व्यापन व्यापकत्व मित्यक पक्ष । तथा च तर्हिशब्दस्य पर्वतविशेष्यकज्ञानविषयत्वोपलक्षितो यो वह्नि तत्प्रति योगिकाभावव्यापकत्वमित्यर्थ । अन्वयश्चास्य नञर्थ एव । तथाच पर्वतविशेष्यकज्ञानविप यत्वोपलक्षितवह्न्यभावव्यापको धूमाभाव आपत्तिविषयपर्वतवृत्तित्ववान् इति, धूम पर्वत विशेष्यकज्ञानविषयत्वोपलक्षितवह्न्यभावव्यापकापत्तिविषयीभूतपर्वतनिष्ठाभावप्रतियोगीति वा बोध । आरोपितत्व तर्हिशब्दार्थ इति द्वितीय पक्ष । तच्च वह्न्यभावविशेष्यकपर्वतवृत्तित्वारोप जन्यारोपविषयत्व वह्निविशेष्यकपर्वतनिष्ठाभावप्रतियोगित्वारोपजन्यारोपविषयत्व वा । तस्य यथायोग्यमन्वय । तदा च वह्न्यभावविशेष्यकपर्वतवृत्तित्वारोपजन्यारोपविषयपर्वतवृत्तित्ववान् धूमाभाव इति, वह्निविशेष्यकपर्वतनिष्ठाभावप्रतियोगित्वारोपजन्यारोपविषयपर्वतनिष्ठाभाव प्रतियोगी धूम इति वा बोध इति । गेयसम्बन्धाश्रयस्तर्हिशब्दार्थ इति तृतीय पक्ष । अत्र पक्षे यदि वह्निर्न स्यादितिवाक्यस्याप्यर्थवत्त्वमेव । वक्ष्यमाणैरर्थक्यदूषणन्तु न तृतीयपक्षे । किन्तु पूर्वपक्षद्वय एव इत्यवसेयम् । अत्र यदिशब्दस्य पर्वतसम्ब न्धित्वमावोऽर्थ । अन्वयश्चास्य नञर्थे । असधातो वृत्तित्वप्रकारकाहार्यज्ञानमर्थ । विषयत्वमाख्यातार्थ । अथवा पर्वतसम्बन्धित्वमेवार्थ । अन्वयश्चास्य वह्नौ। नञ्समभिव्याहृता सधातो अभावप्रतियोगित्वप्रकारकाहार्यज्ञानमर्थ । विषयत्वमाख्यातार्थ । तथाच पर्वतावृत्ति वन्ह्यभाव पर्वतवृत्तित्वप्रकारकाहार्यज्ञानविषय पर्वतवृत्तिवह्नि पर्वतनिष्ठाभावप्रतियोगित्व प्रकारकाहार्यज्ञानविषयत्ववानिति वा प्रथमवाक्यार्थ । द्वितीय तर्हीत्यस्य न केवल पर्वता वृत्तित्व पर्वतनिष्ठाभावप्रतियोगित्व वार्थ । तथा सति तर्हीत्यस्य वह्न्यभावस्य पर्वतवृत्तित्वे वह्नेः पर्वतनिष्ठाभावप्रतियोगित्वे इत्यादिविवरणासगत्यापत्ते । किन्तु वन्ह्यभावविशेष्यकपर्वत वृत्तित्वज्ञानविरोधिज्ञानविषयत्वविशिष्टपर्वतावृत्तित्वम् ।अन्वयश्चास्य नञर्थे ।अथवा वह्निविशेष्य कपर्वतनिष्ठाभावप्रतियोगित्वप्रकारकज्ञानविरोधिज्ञानविषयत्वविशिष्टपर्वतवृत्तित्व तदर्थ । अन्व यश्चास्य धूमे । तथाच वह्न्यभावविशेष्यकपर्वतवृत्तित्वज्ञानविरोधिज्ञानविषयत्वविशिष्टपर्वतावृत्ति त्ववान् धूमाभाव पर्वतवृत्तित्वप्रकारकापत्तिविषय , वह्निविशेष्यकपर्वतनिष्ठाभावप्रतियोगित्वज्ञा-

नविरोधिज्ञानविषयत्वविशिष्टपर्वतवृत्तित्ववान् धूम पर्वतनिष्ठाभावप्रतियोगित्वप्रकारकापत्तिवि-षय इति वा बोध । असधात्वर्थवृत्तित्वप्रकारकापत्त्यन्वितविषयत्वस्य नञ्समभिव्याहृतासधात्व-र्थाभावप्रतियोगित्त्वप्रकारकापत्त्यन्वितविषयत्वस्य वाऽऽख्यातार्थत्वात् । अत्र प्रथमवाक्ये वृत्तित्व-प्रकारकाहार्यज्ञानत्वेन रूपेणासधात्वर्थता । द्वितीये च वृत्तित्वादिप्रकारकापत्तित्वेनेति विशेष । अत्र च धातो लक्षणाभ्युगम एव दोष । नन्वसधातोर्वृत्तित्वादिमात्रमर्थ । आख्यातस्य लिङ्त्वेन कदाचिदाहार्यज्ञान कदाचिदापत्तिश्चार्थ । तत्र धात्वर्थस्य प्रकारितयाऽन्वय । तस्य विषयतया मुख्यविशेष्येऽन्वय इति न धातोर्लक्षणाकल्पनापत्ति । आख्यातस्यापत्त्यर्थकत्व तथापि सम्मतम् । अत एव यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादित्यस्य प्रामाण्यमुपपद्यत इति चेन्न । लिङ्त्वावच्छिन्ननिरूपितवृत्तिज्ञानप्रयोज्यप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्न प्रति धातुपदनिरूपितवृत्तिज्ञानजन्योपस्थिते हेतुताया स्वर्गकामो यजेतेत्यादौ क्लृप्तत्वेन लिङ्त्वावच्छिन्नार्थस्य धात्वर्थविशेष्यतयान्वयासभवात् । नच त्वयेव मयापिवलिङर्थापत्त्यादेर्विशेषणतयैव धात्वर्थेऽन्वय स्वीक्रियत इति वाच्यम् । तथापि पर्वता-वृत्तित्वपर्वतवृत्तित्वयो पर्वतवृत्तित्वपर्वतनिष्ठाभावप्रतियोगित्वयो परस्परविरुद्धतयाऽहार्य-शाब्दबोधानङ्गीकारमते पर्वतावृत्तिधूमाभावत्वावच्छेदेन पर्वतवृत्तित्वस्य, पर्वतवृत्तिधूमत्वा-वच्छेदेन पर्वतनिष्ठाभावप्रतियोगित्वस्य च बोधासभवात् । नच पर्वतवृत्तिधूमे पर्वतनिष्ठा-भावप्रतियोगित्वस्य स्वरूपसबन्धेन नान्वय स्वीक्रियते । अपि तु स्वज्ञानविषयत्वादिन-येन केनचित्सम्बन्धेन । एव पर्वतावृत्तिधूमाभावत्वावच्छिन्ने पर्वतवृत्तित्वस्यापीति वाच्यम् । भूतले घटसत्त्वादशाया भूतले घटो नास्तीति प्रयोगवारणाय निरूपितत्वसम्बन्धावच्छिन्न-धात्वर्थवृत्तित्वनिष्ठप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाश्रयत्वनिष्ठप्रकारतानिरूपितविशेष्य तासम्बन्धेन शाब्दबुद्धित्वावच्छिन्न प्रति वृत्तित्वार्थकधातुसमभिव्याहृताख्यातसमभि-व्याहृतयत्किंचित्पदनिरूपितवृत्तिज्ञानजन्योपस्थितेर्विशेष्यतासम्बन्धेन कारणत्वस्य, नञ्स मभिव्याहृतासधात्वर्थाभावनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धाव च्छिन्नप्रतियोगित्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोध प्रति नञ्समा भिव्याहृतासधातुसमभिव्याहृताख्यातसमभिव्याहृतयत्किंचित्पदनिरूपितवृत्तिज्ञानजन्योपस्थि ते कारणत्वस्य च वाच्यतया स्वेच्छाधीनसम्बन्धेन तादृशान्वयबोधस्य व्युत्पत्तिविरुद्धत्वात् ।

प्रकृते तादृशव्युत्पत्तिसङ्कोचकल्पने न तथैव गौरवमिति तृतीयपक्षे दूषणं मनसि निधाय प्रथमपक्षद्वये दूषणं प्रकाशयति **समीचीनं न तदीति।** वदु वहुपदघटितं वाक्य। **निरर्थकं** स्यादिति शेष। सम्भवति सार्थकत्वे निरर्थकत्वकल्पनाया अन्याय्यत्वादिति भाव। तस्मात्प्रथमोक्तस्वपक्ष एव समीचीन इति तात्पर्यम्। (१४)

ननु त्वन्मतेऽपि यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति वाक्यस्याप्रामाण्यापत्ति। नचेष्टापत्ति। तादृशवक्तरि आप्तत्वव्यवहारस्य सर्वानुभवसिद्धत्वात्। यदा पर्वते वह्निर्नास्तीत्यभिदधान पुमांस प्रति पर्वतवर्तिनं धूममुपदर्शयन् यदि कश्चिद्ब्रूयात् यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति। तदा मध्यस्थ किमेन सत्यवादिनमामनुते। इत्यत आह—

मू० अभिवेशाभियुक्तानां वाक्यानामप्रमाणता।
तेषामवश्यवाच्यत्वात् प्रयोगो न विहन्यते॥ १५॥

**अभिवेशः** आग्रहात्मको ज्ञानविशेष। अप्रमाणता इष्टैवेति शेष। तर्हि किमर्थं प्रयोक्तव्यमित्यत आह **तेषामिति।** तादृशवाक्यानामित्यर्थ। **अवश्यवाच्यत्वादिति।** पर्वते वह्निविरहमभिदधानस्य पुंस वह्निविरोधिवह्न्यभावबुद्धिप्रतिबन्धकतदापादकरूपमानसज्ञानोपधायकस्वार्थबोधार्थत्वेनावश्यवाच्यत्वादित्यर्थ। तथाच मुख्यतात्पर्यविषय पर्वते वह्निमत्त्वमुपादाय वक्तरि सत्यवादितान्यवहार इति भाव। (१५)

प्रसङ्गादापत्तिवाक्यघटकलिङाद्यर्थमाह।

मू० प्रसङ्गवाक्ये चापत्तिर्लिङादिभिरुदीर्यते।
अन्ये वदन्त्यवाच्यत्वमयुक्तत्वं परे जगुः॥ १६॥

आपत्तिर्लिङाद्यर्थ तस्य धात्वर्थेऽन्वय इति स्वमते तत्रान्वयबोध पूर्वोक्त एव। अवाच्यत्वमापत्तिवाक्यघटकलिङाद्यर्थ इति केचित्। अवाच्यत्वमनिष्टापत्तित्व। तच्च

[1]स्वानिष्टत्वे सति स्वज्ञानकारणसमवहितत्व । तस्य धात्वर्थेऽन्वय । धूमविशेष्यकपर्वत-वृत्त्यभावप्रतियोगित्वज्ञान प्रति वह्निविशेष्यकपर्वतनिष्ठाभावप्रतियोगित्वज्ञानस्य धूमाभाव-विशेष्यकपर्वतवृत्तित्वज्ञान प्रति वह्न्यभावविशेष्यकपर्वतवृत्तित्वज्ञानस्य वा कारणतायाऽनुपप-त्तिरिति । बोधप्रकारस्तु पूर्ववत् । परेतु अयुक्तत्वमापत्तिवाक्यघटकलिङाद्यर्थं इत्याहु । अयु-क्तत्व युक्तिशून्यत्वम् । युक्ति प्रमाण । प्रमापकशून्यत्व भ्रमविषयत्वमिति यावत् । तस्य धात्वर्थेऽन्वय ॥ १६ ॥

मू० बाधकाभावमन्ये तु लिङाद्यर्थं प्रचक्षते ।
सत्पदप्रकृतिर्धर्ममाचष्टे तद्यथोचितम् ॥ १७ ॥

अन्ये तु बाधकाभाव एवापत्तिवाक्यघटकलिङाद्यर्थ इत्याचक्षते । स च बाधकशून्यत्वेन सभाव्यमानत्व । बाधक च स्वज्ञानप्रतिबन्धकम् तच्छून्यत्वप्रकारकसभावनाविषयत्व लिङर्थ । तस्य धात्वर्थेऽन्वय । युज्यते चैतत् । धूमाभावनिष्ठपर्वतवृत्तित्वज्ञान प्रति हि पर्वते धूमवत्त्वज्ञान प्रतिबन्धकम् । तच्च पर्वते वह्न्यभावज्ञाने सति न सभवति व्यापकाभावज्ञाने व्याप्यज्ञानस्यासभवादिति धूमाभावे पर्वतवृत्तित्वज्ञानप्रतिबन्धक नास्तीति तच्छून्यत्वेन सभाव्यमानत्व धूमाभावनिष्ठपर्वतवृत्तित्वादेरक्षतमिति । सच्छब्दपूर्वशब्दो भाव बोधयति । सच्छब्दस्तु यथायोग सन्तमर्थम् । स च यत्र सविषयकधातुना सह समभिव्याह्रियते । तत्र विषयत्वम् । यथा अभावस्य वैशिष्ट्य सम्बन्धान्तर सत्सिद्ध्यतीति । सम्बन्धान्तरत्वप्रकारकसिद्धिविषयीभूतमित्यर्थ । यत्र भूतार्थप्रत्ययान्तेन तत्रोत्तरकालीनत्वम् । यथा अतिशयित सन्निद्रातीत्यादौ शयनोत्तरकालीननिद्रावानित्यर्थ । यत्र भविष्यदर्थकप्रत्ययान्तेन तत्र पूर्वकालीनत्वम् । यथा तृप्तिं प्राप्स्यन् सन्नभ्यवहरतीति । तृप्तिप्राप्तिपूर्वकालीनाभ्यवहारवानित्यर्थ । यत्र वर्तमानार्थकप्रत्ययान्तेन समभिव्याह्रियते तत्र समानकालीनत्वम् यथा दण्डमवलम्बमान सन् गच्छतीति । दण्डावलम्बनसमानकालीनगमनवानित्यर्थ । एव गच्छन्त सन्त चैत्र पश्येत्यादौ चैत्रविशेष्यकगमनप्रकारकदर्शनवास्त्वमिति बोध । दण्डवन्त सन्त गच्छन्त चैत्र पश्यत्यादौ दण्डावलम्बनसमानकालीन

[1] स्वपदार्थोऽत्र वक्ता ।

गमनविशिष्टचैत्रविषयकदर्शनवानिति बोध । तृप्तिं प्राप्स्यन्तं सन्तमभ्यवहरन्तं चैत्रं पश्येत्यादौ तृप्तिप्राप्तिपूर्वकालीनाभ्यवहारविशिष्टचैत्रविषयकदर्शनवानिति बोध. । शयितं सन्तं निद्रावन्तं चैत्रं पश्येत्यादौ शयनोत्तरकालीननिद्राविशिष्टचैत्रविषयकदर्शनवानिति बोध. । शयानं सन्तं निद्रावन्तं चैत्रं पश्येत्यादौ शयनसमानकालीननिद्राविशिष्ट-चैत्रविषयकदर्शनवानिति बोध. इत्यादिकमूहनीयमिति ॥ १७ ॥

प्रसंगात्सच्छब्दप्रभावमाह ।

मू० असौ पट्टाभिषिक्तः सन्निति साम्राज्यकर्मणि ।
क्वचिद्भग्नोद्यमो जज्ञे बाधते तं स्वयं क्वचित् ॥ १८ ॥

**असौ** सच्छब्द· इतिशब्दस्य साम्राज्ये पट्टाभिषिक्त तत्तुल्यप्रभाव इत्यर्थ । तत्तुल्यप्रभावत्व च तत्प्रसक्तिकस्थलप्रसक्तिकत्वे सति तत्प्रयोज्यकार्यप्रयोजकत्वम् । यथा घटो भूतलवृत्तिरिति ज्ञायत इत्यत्रेतिशब्दप्रसक्तौ सच्छब्द प्रयुज्यते भूतलवृत्ति. सन् ज्ञायत इति । क्वचिच्च भग्नोद्यम संपद्यते । यथा भूतले घटो नास्तीति ज्ञान-मस्य जातमित्यादावितिशब्द प्रयुज्यते । सच्छब्दस्योद्यम पर भज्यते । दृश्यते च क्वचित् इतिशब्दसंबन्धयोग्यताविधुरावेश सच्छब्द । यथा दण्डमवलम्बमान. सन्नुपयातीत्यत्र प्रयुज्यमान सच्छब्द तमितिशब्द बाधते । प्रभवतश्च व्यक्तमुभावपि संनिधिपदं गौणतामापादयितु सच्छब्दपूर्वपदस्य धर्मिलाक्षणिकत्वात् । विपर्यासयति च विषयतां सच्छब्द । भूतलवृत्तिर्घटो ज्ञायत इति सच्छब्दवियुक्ताने वाक्ये भूतलवृत्तित्व धर्मितावच्छेदकतया भासते । घटो भूतलवृत्ति सन् ज्ञायत इत्यत्र विधेयकोटिप्रविष्ट-तया । संकुचन्ति च भूयस्यो व्युत्पत्तय सच्छब्दसमभिव्याहारवशात् । न हि प्रथमाद्य-न्तार्थस्य भेदसंबन्धेन साक्षान्नामार्थे धात्वर्थे वा अन्वयो व्युत्पत्तिसिद्ध । कल्पयति च कांचन व्युत्पत्तिमधिका सच्छब्द । यथा गच्छन्तं सन्त चैत्र पश्येत्यादौ सच्छब्दोत्तरद्वि-तीयाया निरर्थकत्वेऽपि आवश्यकत्वम । एव गच्छत्पदोत्तरद्वितीयाया अपीत्यादिक चिरमालोकनीयम् ॥ १८ ॥

मू० आकारार्थो विषयिता शब्द इत्यपरे जगुः ।
इतिना पौनरुक्त्यात्र नाभेदार्थत्वमिष्यते ॥ १९ ॥
तादृग्वाक्यजन्यधीतुल्यविषयत्वार्थतापि नो ।
मत्पक्षाव्यापकत्वावच्छेदेन पुनरुक्तितः ॥ २० ॥

भूतले घट इत्याकारकं ज्ञानमित्यत्राकारशब्दार्थो विषयिता । सा च वाक्यद्वयं प्रतीयते । घटपदार्थो घटत्वावच्छिन्नः इतिशब्दार्थनिरूपितत्वद्वारा एकविषयिताया-मन्वेति । भूतले इत्यत्र सप्तम्यन्तार्थो भूतलवृत्तित्वमपि इतिशब्दार्थद्वारा अपरविषयि-तायामन्वेति । तयोरेकत्रापरस्यावच्छिन्नत्वसंबन्धेनान्वय । तथाच भूतलवृत्तित्वविष-यित्वावच्छिन्नघटविषयित्ववत् ज्ञानमिति घटविषयित्वावच्छिन्नभूतलवृत्तित्वविषयित्ववत् ज्ञानमिति वा बोध इति स्वमतम् । अपरे तु भूतले घट इत्येकं पदमव्ययं तादृशवि-लक्षणानुपूर्वीविशिष्टपरम् । इतिशब्दार्थोऽभेदः । आकारशब्दार्थो वाक्यम् । तत्करवं तज्जन-कत्व । तथाच तादृशविलक्षणानुपूर्वीविशिष्टवाक्यजनकं ज्ञानमिति बोधः । भूतले घट इत्येतादृशशब्दप्रयोगं प्रति भूतलवृत्तित्वप्रकारकघटविशेष्यकज्ञानस्य कारणत्वान्नानुपपत्ति-रित्याहुः । अत्र केचिदाचक्षते । एवं रीत्या भूतले घट इत्याकारकं ज्ञानं भूतले घट इति शब्दजनकम् इति वाक्ये पौनरुक्त्यापत्त्याऽप्रामाण्यापत्तिरिति । अन्ये तु तत्रेष्टापत्ति-मेव स्वीकुर्वन्ति । अत्र केचित् भूतले घट इत्येकं पदमव्यय भूतलवृत्तित्वनिष्ठप्रकारतानि-रूपितघटत्वावच्छिन्नविशेष्यताकार्थकम् । आकारशब्दार्थश्चाभेदः । तथाच भूतलवृत्तित्व-निष्ठप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकाभिन्न ज्ञानमित्यन्वयबोधं स्वीकुर्वन्ति । तन्मतं दूषयति इतिनेति । आकारशब्दस्याभेदार्थकत्वञ्च संभवति इतिशब्दस्याभेदार्थकतया पौनरुक्त्यापत्तेः । इदमापातत । इतिशब्दस्य यद्यभेदार्थकतामङ्गीकुर्मः तदा स्यादेवाकार-शब्दस्येतिशब्दप्रतिपाद्यार्थप्रतिपादकत्वात्पौनरुक्त्यम् । परंतु इतिशब्दस्यार्थबोधकत्वमेव नाङ्गी-कुर्मः । नचैवमितिशब्दस्य नैरर्थक्यात्प्रयोगानुपपत्तिरिति वाच्यम् । पूर्वशब्दस्याव्ययता-त्पर्यग्रहणायेतिशब्दप्रयोगावश्यकत्वादिति । यदाच तात्पर्यग्राहकस्यैवेतिशब्दस्याभेद-प्रतिपादकत्वमध्यवसीयते । तदा न प्रयुज्यत एवाकारशब्दः । भूतले घट इति

ज्ञानमित्येव तदानीं प्रयोगादित्यादि । केचित्तु भूतले घट इत्येक पद अव्यय ताद्दशवाक्य परम् । समानविषयकत्वमाकारशब्दार्थ । ताद्दशवाक्यसमानविषयकत्व च ताद्दशवाक्यजन्य शाब्दबोधसमानविषयकत्वमित्याचक्षते । तन्मतमुपन्यस्य दूषयति ताद्दगिति । ताद्दक् ताद्दशानुपूर्वीविशेषविशिष्ट यद्वाक्य तज्जन्या या धी तत्तुल्यविषयत्वार्थकत्वमपि न सभवतीत्यर्थ । तत्र युक्तिमाह प्रत्यक्षाव्यापकत्वादिति । प्रत्यक्षादाव सभवादित्यर्थ । अय भाव । समवायसबन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिप्रत्यक्षानन्तर अय घट इत्याकारक ज्ञानमस्य जातमिति व्यवह्रियते सर्वे । स चानुपपन्न स्यात् । ताद्दशवाक्यसमानविषयकत्वस्य तत्रासभवात् । ताद्दशवाक्याद्धि समवायसबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकाभेदसबन्धावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिबोधो जन्यते । ताद्दशप्रत्यक्षादिक तु समवायसबन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालि । कथकारमनयो समानविषयकत्वम् । ननु तद्वाक्यजन्यशाब्दबोधसमानविषयकत्व नाम तद्वाक्यजन्यशाब्दबोधनिष्ठविशिष्टविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविशिष्टविषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविशिष्टविषयिताश्रयत्वमेव । भूतलवृत्तित्वप्रकारकघटविशेष्यकज्ञानस्य भूतले घट इति वाक्यजन्यभूतलवृत्तित्वप्रकारकघटविशेष्यकशाब्दबोधनिष्ठा या भूतलवृत्तित्वविशिष्टघटत्वावच्छिन्ननिरूपितविषयिता तद्घटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविशिष्टविषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविशिष्टविषयिताकत्वेन तत्समानविषयकत्वोपपत्ति । एव विशेषणतासबन्धावच्छिन्नघटभेदत्वावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिज्ञान प्रति अभेदसबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिबुद्धेरिव समवायसबन्धावच्छिन्नघटत्वप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिबुद्धेरपि प्रतिबन्धकत्वात् ताद्दशवाक्यजन्यशाब्दबोधनिष्ठाभेदसबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविशेषणतासबन्धावच्छिन्नघटभेदत्वावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिब

न्धकतावच्छेदकसमवायसंबन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताया-स्तत्राक्षतत्वात् । इत्यत आह शब्देन पुनरुक्तित इति। तथाच यदि समानविषयकत्वमीदृश स्यात् तदा अय घट इत्याकारकं अय घट इति वाक्यजन्यशाब्दबुद्धिप्रतिबन्धकतावच्छेदकविषयितावटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशालि प्रत्यक्षमस्य जातमिति (शब्दान्तरसमभिव्याहृतम्) वाक्यं यदा प्रयुज्यते तदा अय घट इति वाक्यजन्येत्यादे पौनरुक्त्यापत्ति अय घट इत्याकारकमित्यनेनैव तत्सिद्धेरित्यर्थ ।

अत्र वदन्ति । घटत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशाली यथार्थकतास्वीकारपक्षेऽप्यय दोष समान । तादृशविषयिताया एव तथाविधप्रतिबन्धकतावच्छेदकत्वादिति । नच तादृशविषयितात्वेनाय घट इत्याकारकमित्यनेन बोध । अयं घटइतिवाक्यजन्येत्यनेन तु प्रतिबन्धकतावच्छेदकत्वेनेत्येकरूपेण वारद्वय भानाभावान्न पौनरुक्त्यमिति वाच्यम् । एवमपि अय घट इत्याकारकसमवायसंबन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिप्रत्यक्षमस्य जातमिति वाक्ये तत्र पौनरुक्त्यापत्ति तादृशविषयताया तादृशविषयतात्वेनैव वारद्वय भानात् । एव अय घट इत्याकारकमय घट इति शब्दजनक प्रत्यक्षमस्य जातमिति वाक्ये तादृशजनकतात्वेन तादृशशब्दजनकताया वारद्वय भानात्पौनरुक्त्यम् । तत्रेष्टापत्तौ ममापि प्रकृतवाक्ये तुल्यमिति । अनुभवविरोधस्तूभयो समान इति ॥ २० ॥

मू० घटकत्वं ददात्यर्थस्तद्धीविषयतापि वा ।
निर्धारणविभक्त्यर्थो मध्येशब्दार्थ उच्यते ॥ २१ ॥

प्रथमस्योदाहरणम् । तदान्तयावयवित्वे सतीति विशेषण शरीरलक्षणे देयमिति । शरीरलक्षणनिरूपितघटकत्वाश्रयीभूतमिति तन्निरूपितघटकत्वप्रकारकज्ञानविषयीभूतमिति वा बोध । निर्धारणविभक्त्या योऽर्थ प्रतिपाद्यते स एव मध्येशब्देनापि प्रतिपाद्यते इत्यर्थ । निर्धारणविभक्त्यर्थोऽन्यत्र प्रतिपादितोऽपि न्यूनताभङ्गाय प्रकृते किञ्चित्प्रतिपाद्यते । तत्र निर्धारणविभक्ति पुरुषाणा विष्णुरुत्तम इत्यत्र । पुरुषाणामित्यत्र षष्ठ्यर्थो

भेदोऽभेदश्च । तत्र पुरुषपदार्थस्याभेदे निरूपितत्वसंबन्धेनान्वय । अभेदस्य चानुयोगितासंबन्धेन विष्णुपदार्थे उद्देश्यतावच्छेदकघटकतयान्वयो विष्णौ पुरुषाणामित्यत्र षष्ठ्यर्थभेदे प्रतियोगितयान्वय । तस्य चानुयोगितया पुरुषेऽन्वय । पुरुषस्य च पुनर्भेदे प्रतियोगितासंबन्धेनान्वय । तस्य चानुयोगितासंबन्धेनोत्तमपदार्थेऽन्वय । तस्य चाभेदसंबन्धेन विष्णुपदार्थेऽन्वय । तथाच पुरुषाभिन्नो विष्णु विष्ण्वन्यपुरुषान्योत्तमाभिन्न इति बोध । अत्राभेदमात्रस्य निर्धारणविभक्त्यर्थत्वे विष्ण्वन्यपुरुषस्योत्तमस्य सत्त्वेऽपि पुरुषाणां विष्णुरुत्तम इति वाक्यस्य प्रामाण्यापत्ति । पुरुषाभिन्ने विष्णौ उत्तमाभेदसत्त्वात् । अतो भेदार्थकत्वं स्वीकृतम् । नच भक्षितेऽपि लशुने न शान्तो व्याधि विष्ण्वन्यपुरुषोत्तमस्य सत्त्वेऽपि विष्ण्वात्मकोत्तमपुरुषे विष्ण्वन्यपुरुषान्यत्वस्य सत्त्वेन तादृशवाक्यप्रामाण्यापत्तेर्दुर्वारत्वादिति वाच्यम् । विष्ण्वन्यपुरुषान्यत्वस्योद्देश्यतावच्छेदकीभूतोत्तमत्वावच्छेदेनान्वयस्वीकारेण विष्ण्वन्यपुरुषोत्तमस्य सत्त्वे तादृशवाक्यस्य प्रामाण्यविरहात् इदानीं विष्ण्वन्यपुरुषान्यत्वस्योद्देश्यतावच्छेदकव्यापकत्वाभावादिति । अथ विष्ण्वन्यपुरुषस्योत्तमत्वसंभावनादशायां पुरुषाणां विष्णुरुत्तम इति वाक्यस्य प्रामाण्यापत्तिवारणाय निर्धारणविभक्तेर्भेदार्थकत्वमपि स्वीकृत्य तादृशभेदस्य प्रातिलोम्यानुलोम्याभ्यां वारद्वय भानस्वीकारप्रयासस्तु नादर्तव्य । किन्तु पुरुषाणामुत्तम इत्यत्र षष्ठ्यर्थभेदस्योत्तमपदार्थेऽन्वय स्वीकृत्य पुरुषाणामुत्तम इत्यस्योद्देश्यत्व विष्णुरित्यस्य विधेयत्वमित्युद्देश्यविधेयभाववैपरीत्यमेव स्वीकार्यम् । तावता विष्ण्वन्यपुरुषस्योत्तमत्वसंभावनायां पुरुषाणां विष्णुरुत्तम इति वाक्यस्य प्रामाण्यवारणसंभवात् । तदानीमुद्देश्यविधेयभावमहिम्ना पुरुषाभिन्नोत्तमत्वव्यापकत्वस्य विष्णुत्वे लाभेन विष्ण्वन्यपुरुषस्याप्युत्तमत्वे तादृशव्यापकभावबाधात् । नचैवमपि पुरुषोत्तमो विष्णुरिति वाक्यस्य पुरुषाणामुत्तमो विष्णुरिति वाक्यस्य च परस्परवैलक्षण्यानुपपत्ति । उभयत्रापि पुरुषाभिन्नोत्तमत्वावच्छेदेन विष्णुतादात्म्यस्य बोधेन विषयवैलक्षण्याभावादिति वाच्यम् । पुरुषोत्तमो विष्णुरित्यत्र पुरुषोत्तमपदार्थयोरभेद संसर्गमर्यादया भासते पुरुषाणामुत्तमो विष्णुरित्यत्र प्रकारतयेति विषयतावैलक्षण्येन, पुरुषपदार्थेऽभेदसंबन्धस्य प्रतियोगित्वस्योत्तमपदार्थेऽनुयोगित्वस्य भानेन विषयवैलक्षण्येन च वैलक्षण्योपपत्तेरिति । नच पुरुषाणां विष्णुरुत्तम इत्यत्र विष्णुपदार्थस्योद्देश्यत्वमुत्तमप-

दार्थस्य विधेयत्वञ्चानुभवसिद्धमिति वाच्यम् । तादृशानुभवस्य निर्मूलत्वादिति चेन्न । एवं सति प्रमेयानामभिधेयं द्रव्यमिति वाक्यस्य प्रामाण्यापत्तेः । अथ तद्वारणाय पुरुषाभिन्नो घमत्वावच्छिन्नविष्णुत्वावच्छिन्नयोः प्रमेयाभिन्नद्रव्यत्वावच्छिन्नाभिधेयत्वावच्छिन्नयोश्च मिथः उद्देश्यविधेयभावः स्वीक्रियताम् । तेन च परस्परोद्देश्यविधेयभावमहिम्ना परस्परव्याप्यव्यापकभावो लभ्यते । तथाच प्रमेयाभिन्नद्रव्यत्वव्यापकत्वस्याभिधेयत्वे सत्त्वेऽप्यभिधेयत्वव्यापकत्वस्य प्रमेयाभिन्नद्रव्यत्वेऽसत्त्वात् न प्रमेयानामभिधेयं द्रव्यमिति वाक्यस्य प्रामाण्यापत्तिरिति चेत् । एवं सत्यपि पदार्थानामभिधेयं प्रमेयमिति वाक्यस्य प्रामाण्यापत्तेर्दुर्वारत्वात् । पदार्थाभिन्नप्रमेयत्वव्यापकत्वस्याभिधेयत्वे अभिधेयत्वव्यापकत्वस्य पदार्थाभिन्नप्रमेयत्वे च सत्त्वात् । समत्वप्रामाण्यं स्फुटमेव । अथ प्रकृते व्यापकत्वं न समानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वरूपम् । किन्त्वभाववदवृत्तित्वकत्वमेव । एवञ्चाभिधेयत्वाभावस्य पदार्थाभिन्नप्रमेयत्वाभावस्य चाप्रसिद्धत्वान्न तादृशवाक्यस्य प्रामाण्यापत्तिरिति चेत्, एवमपि द्रव्याणां गुणाधिकरणं समवायिकारणमिति वाक्यस्य प्रामाण्यापत्तिः । द्रव्याभिन्नसमवायिकारणत्वाभाववदवृत्तित्वस्य गुणाधिकरणत्वे, गुणाधिकरणत्वाभाववदवृत्तित्वस्य द्रव्याभिन्नसमवायिकारणत्वे च सत्त्वेन तादृशार्थबाधाभावात् ।

यत्तु लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वानङ्गीकारमते निर्धारणविभक्तेर्भेदार्थकत्वस्वीकारप्रयासो न कर्तव्यः । किन्तु परस्परोद्देश्यविधेयभावलभ्यव्याप्यव्यापकभावः । व्यापकत्वं च स्वाभाववदवृत्तित्वकत्वम् । तत्समानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदवद्धर्मकत्वं वा । उभयथापि न क्षतिः । तथाहि स्वाभाववदवृत्तित्वकत्वं स्वनिष्ठान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वकत्वम् । अन्यथा अतिप्रसङ्गात् । एवञ्च प्रमेयानामभिधेयं द्रव्यमिति वाक्यस्य न प्रामाण्यापत्तिः । न वा द्रव्याणां गुणाधिकरणं समवायिकारणमिति वाक्यस्य । तस्य द्रव्याभिन्नत्वविशिष्टसमवायिकारणत्वत्वस्य समनियतशुद्धसमवायिकारणत्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकतयान्वयितावच्छेदकीभूततादृशगुरुधर्मावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववदवृत्तिगुणाधिकरणत्वकत्वरूपगुणाधिकरणत्वव्यापकत्वाप्रसिद्ध्या तद्बोधकत्वासम्भवात् । नन्वेवमपि

पुरुषाणां विष्णुरुत्तम इति वाक्यस्य प्रामाण्यानुपपत्तिः । पुरुषाभिन्नोत्तमत्वत्वस्य समनियतशुद्धोत्तमत्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रतियोगितानिरूपकाभाववद्वृत्तिविष्णुत्वकत्वरूपविष्णुत्वव्यापकत्वाप्रसिद्ध्या तद्बोधकत्वासंभवादिति चेन्न । यत उत्तमत्वत्वं उत्कर्षत्वम्, तथाच पुरुषाभिन्नोत्तमत्वत्वं सामानाधिकरण्यघटितसामानाधिकरण्यसंबन्धेन पुरुषाभिन्नत्वविशिष्टोत्कर्षत्वम् । तत्समनियतत्वं न शुद्धोत्कर्षत्वस्य तस्य सिंहादिनिष्ठमृगोत्कर्षेऽपि सत्त्वात् तत्र निरुक्तविशिष्टोत्कर्षत्वस्यासत्त्वादिति ।

तन्न । एवमपि पदार्थाना गुणाधिकरणं समवायिकारणमित्यादिवाक्यानां प्रामाण्यानुपपत्तेर्वज्रलेपायितत्वात् । तस्मान्निर्धारणविभक्ते भेदार्थकत्व स्वीकृत्य प्रातिलोम्याविमयासोऽवश्यादर्तव्य । भेदार्थकत्वमात्रस्वीकारे घटाना विष्णुरुत्तम इति वाक्यस्य प्रामाण्यापत्ति विष्ण्वन्यघटान्योत्तमाभेदस्य विष्णौ सत्त्वात् । अतोऽभेदार्थकत्वस्वीकार । अथ लघुसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे निर्धारणविभक्तेरभेदार्थकत्वस्वीकारमन्तरेणापि घटाना विष्णुरुत्तम इति वाक्यस्य प्रामाण्य शक्यते वारयितुम्, उद्देश्यान्वितभेदविशेष्यतापन्नस्य प्रकृत्यर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव भेदान्वयस्वीकारेण विष्ण्वन्यत्वविशिष्टघटत्वस्य समनियतघटत्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या तद्बोधकत्वासभवादिति चेन्न । लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमनङ्गीकृत्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिकत्वसंबन्धेन प्रकृत्यर्थस्य भेदेऽन्वयस्वीकारे समवायिकारणाना पृथिवी गन्धवतीति वाक्यस्य प्रामाण्यानुपपत्ति । पृथिव्यन्यत्वविशिष्टसमवायिकारणत्वावच्छिन्नप्रतियोगिताकभेदवद्गन्धवच्छिन्नाभिन्ना पृथिवीत्यन्वयबोधो वक्तव्य । सच न सभवति । पृथिव्यन्यत्वविशिष्टसमवायिकारणत्वस्य स्वसमनियतपृथिव्यन्यत्वविशिष्टद्रव्यत्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रतियोगिताकभेदस्याप्यप्रसिद्धत्वेन तद्बोधकत्वासंभवात् । अतो न प्रकृत्यर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसबन्धेन विभक्त्यर्थभेदेऽन्वय स्वीकर्तव्य । किन्तु अन्वयितावच्छेदकसमव्यापकरूपावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव । एवं च समवायिकारणाना पृथिवी गन्धवतीत्यत्र पृथिव्यन्यत्वविशि-

ष्टसमवायिकारणत्वस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तत्समव्यापकस्य पृथिव्यन्यत्ववि-शिष्टद्रव्यत्वस्यावच्छेदकतया तदवच्छिन्नप्रतियोगिताकभेदमादाय तादृशवाक्यस्य प्रामाण्य-मिति वाच्यम्। एवं च घटाना विष्णुरुत्तम इत्यत्रापि विष्ण्वन्यत्वविशिष्टघटत्वस्या-भावप्रतियोगितानवच्छेदकत्वेऽपि तत्समव्यापकस्य शुद्धघटत्वस्यावच्छेदकतया तदवच्छिन्न प्रतियोगिताकभेदमादाय तादृशवाक्यस्य प्रामाण्यापत्तेर्दुर्वारत्वात् विभक्तेर्भेदार्थकत्वमाव-श्यकमिति। एवञ्च निर्धारणविभक्तेरभेदो भेदश्चार्थ इति सिद्धे यत्र पुराणाणां मध्ये विष्णुरुत्तम इति प्रयुज्यते तत्र मध्येशब्दस्यैवाभेदो भेदश्चार्थः। अन्वयस्तु पूर्ववदिति। श्लोकार्थस्तूक्त। अत्र केचित्। मध्येशब्दं पष्ठ्यादे निर्धारणार्थत्वस्फुटीकरणार्थं एवे त्यपिमाहु इत्यास्ता विस्तर ॥ २१ ॥

मू० अवधित्वमपेक्ष्यार्थस्तद्धीविषयताऽपि वा।
भेदश्च वर्जयित्वादेर्ल्यबर्थश्चाविवक्षितः ॥ २२ ॥

उदाहरणञ्च प्रथमस्य कुलालत्वमपेक्ष्य कुलालपितृत्वस्य कारणतावच्छेदकत्वे गौरवमिति। अत्र कारणत्वावच्छेदकत्वपद कारणतावच्छेदकत्वप्रकारकज्ञान परम्। विरोधिज्ञानविषयत्व सप्तम्यर्थ। अन्वयश्चास्य गौरवे। तथाच कुलालपि-तृत्वनिष्ठ कुलालत्वमपेक्ष्य गौरव कुलालपितृत्वविशेष्यककारणतावच्छेदकत्वप्रकारकग्रह-विरोधिग्रहविषयीभूतमित्यन्वयबोध। अथवा कारणतावच्छेदकत्व इत्यनन्तर सभाव्यमाने सतीति पूरणीयम्। सतिसप्तम्या प्रयोज्यत्वमर्थ। सभाव्यमानाभिन्नकारणतावच्छेद-कत्वप्रयोज्यत्व कारणतावच्छेदकत्वसभावनाप्रयोज्यत्व एव पर्यवस्यति। यद्वा कारणता वच्छेदकत्वपद कारणतावच्छेदकत्वसभावनापरम्। प्रयोज्यत्व सप्तम्यर्थ। गौरवमित्यनन्तर सभाव्यत इति पूरणीयम्। तत्र सभावनाया कारणतावच्छेदकत्वसभावनाप्रयोज्यत्वमन्वेति। तथाच कुलालपितृत्वनिष्ठ कुलालत्वमपेक्ष्य गौरवं कारणतावच्छेदकत्वसभावनाप्रयोज्यसभा-वनाविषयीभूतमित्यन्वयबोध। युज्यते चैतत्। कुलालपितृत्वस्य प्रथमत कारणता वच्छेदकत्वमसभाव्य गौरव न केन चिदुद्भावयितु शक्यमिति। अत्र कुलालपितृत्वमपेक्ष्ये त्यत्रापपूर्वेक्षधात्वर्थ अवधित्व अवधिमत्त्वम् अवधितानिरूपकत्व। अवधित्वचेदम-

म्नाद्भुर्विति प्रतीतिसाक्षिकस्वरूपसम्बन्धविशेष । अथवा अवधित्व निरूपितत्वम् । तथाच कुलालत्वमपेक्ष्य कुलालपितृत्वस्य गौरवमित्यस्य कुलालत्वनिरूपितकुलालपितृत्वनिष्ठगौरवमित्यर्थ । मद्गते गौरवमवच्छेदकगौरवम् । तच्चाधिक्यपदार्थघटितत्वम् । कुलालत्वघटकपदार्थपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणपदार्थघटितत्वमिति यावत् । अत्र कुलालत्वनिरूपितत्वम याहतमेव । नच कुलालत्वघटकपदार्थाप्रसिद्धि तस्याखण्डपदार्थरूपत्वादिति वाच्यम् । स्वस्यैव स्वघटकत्वोपगमात् । तत्पर्याप्तसङ्ख्या एकत्वसङ्ख्येति नानुपपत्ति । नचैव रीत्या गौरवनिरुक्तौ कुलालत्वस्य कारणतावच्छेदकत्वमपेक्ष्य कुलालपितृत्वस्य कारणतावच्छेदकत्वे गौरवमित्यत्रानुपपत्ति । तत्र निरुक्तरीत्या शाब्दबोधाङ्गीकारासंभवादिति वाच्यम् । तत्र गौरवपदस्य स्वाश्रयघटकपदार्थपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणपदार्थघटितधर्मवृत्तित्वरूपत्वात् । तथाच कुलालत्वनिष्ठकारणतावच्छेदकत्वाश्रयधर्मघटकपदार्थपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणपदार्थघटितधर्मवृत्तित्व कुलालपितृत्वनिष्ठकारणतावच्छेदकत्वनिष्ठमित्यन्वय । सङ्ख्याया न्यूनत्वाधिकत्वे चानुपदमेव निर्वक्ष्येते । अत्र कारणतावच्छेदकत्वस्य कुलालपितृत्वनिष्ठत्वांशेऽप्रामाण्यमिष्टमेव । उक्तवाक्यस्याभिनिवेशप्रयुक्तत्वादित्यवसेयम् । एव कुलालत्वमपेक्ष्य कुलालपितृत्वस्य कारणतावच्छेदकत्व गुर्वित्यत्र कुलालत्वपद कुलालत्वनिष्ठकारणतावच्छेदकत्वपरम् । तेन कुलालत्वनिष्ठकारणतावच्छेदकत्वाश्रयधर्मघटकपदार्थपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकरणपदार्थघटितधर्मवृत्तित्वाश्रयीभूत कुलालपितृत्वनिष्ठकारणतावच्छेदकत्वमित्यन्वयबोध । धर्मितावच्छेदकतांशे भ्रमत्वानङ्गीकारे तु कुलालपितृत्वस्येत्यत्र षष्ठ्यर्थो न वृत्तित्व किन्तु वृत्तित्वेन सभाव्यमानत्वम् । अस्य वाक्यस्य प्रामाण्यग्रहे तु गुरुपदमपि यथोक्तगुरुत्वेन सभाव्यमानपर द्रष्टव्यम् । कुलालपितृत्वमपेक्ष्य कुलालत्वस्य कारणतावच्छेदकत्वे लाघव मित्यत्र तु कुलालत्वनिष्ठ कुलालपितृत्वघटकपदार्थपर्याप्तसङ्ख्यान्यूनसङ्ख्यापर्याप्त्यधिकरणपदार्थघटितत्व कुलालत्वविशेष्यककारणतावच्छेदकत्वप्रकारकसभावनाप्रयोज्यसभावनाविषयीभूतमित्यन्वयबोध । कुलालपितृत्वस्य कारणतावच्छेदकत्वमपेक्ष्य कुलालत्वस्य कारण तावच्छेदकत्वे लाघवमित्यत्र तु कुलालपितृत्वनिष्ठकारणतावच्छेदकत्वाश्रयधर्मघटकपदार्थ पर्याप्तसङ्ख्यान्यूनसङ्ख्यापर्याप्त्यधिकरणपदार्थघटितधर्मवृत्तित्वम् कुलालत्वनिष्ठकारणतावच्छे-

दकत्वनिष्ठमित्यन्वयबोध । यत्रतु अपेक्षयेत्येव श्रूयते तत्रापेक्षाशब्दार्थो निरूपितत्वम् । तृतीयार्थो वैशिष्ट्यम् । अन्वयश्च पूर्ववदित्यवसेयम् । एव दण्डमपेक्ष्य दण्डरूपस्य कारणत्वे गौरवमित्यत्र दण्डनिष्ठकारणतावच्छेदकसम्बन्धघटकपदार्थपर्याप्तसङ्ख्याधिकसङ्ख्या-पर्याप्त्यधिकरणपदार्थघटितसम्बन्धावच्छिन्नत्व दण्डरूपनिष्ठकारणत्वनिष्ठमित्यन्वयबोध इत्यादिकं स्वयमूहनीयम् । वर्जयित्वेत्यत्र तु भेदो धात्वर्थ । आदिपदात् विहाये त्यादे परिग्रह ।यथा नित्यद्रव्याणि विहाय वृत्तिमत्त्व साधर्म्यमिति । अत्र पदार्थानामित्य ध्याहार्यम् । नित्यद्रव्याणीत्यत्र प्रतियोगितानिरूपकत्व द्वितीयार्थ । विपूर्वकधात्वर्थो भेद । ल्यबर्थश्चाविवक्षित । अन्वयश्चास्य पदार्थे । तथाच नित्यद्रव्यप्रतियोगिकान्योन्या-भाववत्पदार्थनिरूपितसाधर्म्यत्ववत् वृत्तित्वमित्यन्वयबोध ॥ २२ ॥

मू० न्यूनाधिकत्वे संख्याया व्याप्यव्यापकते न हि ।
सामानाधिकरण्यादेर्विरहेऽप्यवगाहनात् ॥ २३ ॥ ✗

द्रव्याण्यपेक्ष्य पार्थिवानि न्यूनसङ्ख्याकानीत्यत्र शाब्दबोधो विचार्यते । अत्र द्रव्यपद द्रव्यत्वावच्छिन्नपर्याप्तसङ्ख्यापरम् । निरूपितत्वमपेक्ष्यार्थ । तस्य न्यूनत्वेऽन्वय । एव पार्थिवाण्यपेक्ष्य द्रव्याण्यधिकसंख्याकानीत्यत्र पार्थिवपद पार्थिवत्वावच्छिन्नपर्याप्तसङ्ख्यापरम् । निरूपितत्वमपेक्ष्यार्थ । तस्याधिकत्वेऽन्वय । तथा च द्रव्यत्वावच्छिन्नपर्याप्तसङ्ख्यान्यूनसङ्ख्या-पर्याप्त्यधिकरणानि पार्थिवानि, पार्थिवत्वावच्छिन्नपर्याप्तसङ्ख्याधिकसङ्ख्यापर्याप्त्यधिकर-णानि द्रव्याणीति च बोधो जायते । तत्र पार्थिवत्वावच्छिन्नपर्याप्तसङ्ख्याया द्रव्यत्वाव-च्छिन्नपर्याप्तसङ्ख्यान्यूनत्वम् द्रव्यत्वावच्छिन्नपर्याप्तसङ्ख्याया पार्थिवत्वावच्छिन्नपर्याप्तसङ्ख्या-धिकत्व च किमिति संदेह । अत्र न्यूनत्व व्याप्यत्वम् । तच्च तत्समानाधिकरणभेदप्रति-योगितावच्छेदकत्वे सति तत्समानाधिकरणत्वम् । द्रव्यत्वावच्छिन्नपर्याप्तसङ्ख्याधिकरण जलादौ पार्थिवत्वावच्छिन्नपर्याप्तसङ्ख्याभेदस्य पृथिव्या तत्समानाधिकरणत्वस्य च सत्त्वा-दनुपपत्ति । नच द्रव्याण्यपेक्ष्य समवायिकारणानि न्यूनसङ्ख्याकानीति वाक्यस्य प्रामाण्यापत्ति सङ्ख्याया व्यासज्यवृत्तित्वेन द्रव्यत्वावच्छिन्नपर्याप्तसङ्ख्याधिकरण पृथि

व्यासे प्रत्येकं समवायिकारणतावच्छिन्नपर्याप्तसङ्ख्यावद्भेदस्य सत्त्वादिति वाच्यम् । समवायसम्बन्धावच्छिन्नप्रतियोगिताकभेदस्यैव विवक्षितत्वात् । द्रव्यत्वावच्छिन्नपर्याप्तस-ङ्ख्याधिकरणे समवायिकारणत्वावच्छिन्नपर्याप्तसङ्ख्यानिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिता-वच्छेदकताकभेदस्यासत्त्वेनानुपपत्त्यभावात् । एवमधिकत्वं व्यापकत्वम् । तच्च तत्समानाधिकरणान्योन्याभावप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकताशून्यत्वे सति तन्निष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदसमानाधिकरणत्वम् । तादृशञ्च पार्थिवत्वावच्छिन्नपर्याप्तसङ्ख्याव्यापकत्वं द्रव्यत्वावच्छिन्नपर्याप्तसङ्ख्याया-मव्याहतमेवेति केषाञ्चिन्मतम् । तदनेन दूष्यते । यद्येवं न्यूनत्वाधिकत्वे सङ्ख्यायाः स्यातां तदा यत्र भूतले दश घटाः सन्ति पटाश्च षट् तत्रैतान्घटानपेक्ष्यैते पटाः न्यूनसङ्ख्याका इति सर्वैर्व्यवह्रियते । स च व्यवहारो नोपपद्यते । तावद्घटत्वावच्छिन्न-पर्याप्तसङ्ख्यायाः तावत्पटत्वावच्छिन्नपर्याप्तसङ्ख्यायाश्च परस्परसामानाधिकरण्याभावात् । एवमेतान् पटानपेक्ष्यैते घटा अधिकसङ्ख्याका इति सर्वैर्व्यवह्रियते । सोऽपि न स्यात् । तावद्घटत्वावच्छिन्नपर्याप्तसङ्ख्यायास्तावत्पटत्वावच्छिन्नपर्याप्तसङ्ख्याधिकरणपटवृत्तिभेदप्रतियो-गितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतावत्त्वेन तच्छून्यत्वाभावादित्यर्थः । ननु किमित्यारोप्य शिरश्छेद्यते । यतो न्यूनत्वशरीरे सामानाधिकरण्यं अधिकत्वशरीरे च समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वं च निवेश्य वयं दूष्यामहे । यद्येव विशेषणं नोपाददाम तदा कस्य कक्षमवलम्बेम इति चेत् । तर्हि यत्र दश घटाः सन्ति पटाश्च दश तत्र तावद्घटत्वावच्छिन्नपर्याप्तसङ्ख्याया तावत्पटत्वावच्छिन्नपर्याप्तसङ्ख्यायाश्च परस्परन्यू-नाधिकभावव्यवहारः स्यात् । परस्परसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वात् परम्परावच्छिन्नप्रतियोगिताकान्योन्याभावसमानाधिकरणत्वाच्च । अतः सामानाधिकरण्या-दिनिवेशेनैव बोधो वक्तव्य इति । (२३)

मू० न न्यूनाधिकसंख्यत्वे यत आत्माश्रयो भवेत् ।
तत्रान्यथा निरुच्येते किमत्रैवापराध्यते ॥ २४ ॥

अत्र केचित् द्रव्याण्यपेक्ष्य पार्थिवानि न्यूनसंख्याकानीत्यत्र द्रव्यत्वावच्छिन्नसमवेत-

मित्यादिप्रतीतौ निरुक्ताधिकसख्याकत्वस्यैव विषयत्वसभवेन सख्यायामुत्कर्षापकर्षाख्य जातिसद्भावे मानाभाव । बाधकश्च तादृगुत्कर्षापकर्षयो साकर्यप्रसग । तथाहि । चतुर्निष्ठसख्यावधिकोत्कर्षं विहाय षण्णिष्ठसख्यावधिकापकर्ष त्रिनिष्ठसख्याया, षण्णिष्ठसख्यावधिकापकर्षं विहाय चतुर्निष्ठसख्यावधिकोत्कर्षं सप्तनिष्ठसख्याया, उभयोश्च पञ्चनिष्ठसख्याया समावेश इति । अपिचैतादृशोत्कर्षापकर्षाभ्या द्रव्यनिष्ठसख्यासु न्यूनाधिकभावनिर्वाहसभवेऽपि गुणादिनिष्ठसख्यासु न्यूनाधिकभावस्य निर्वाहयितुमशक्यत्वात् अयमारभ सार्थकएव॥ २५ ॥

मू० समव्याप्यव्यापकते निरूप्येते यतस्तदा ।
तद्वत्त्वरूपे ते स्यातामर्धत्वेन विशेषिते ॥ २६ ॥

यत्र दश घटा सन्ति पटा पञ्च तत्रैतान् घटानपेक्ष्यैते पटा अर्धन्यूनसख्याका, एतान् पटानपेक्ष्यैते घटा अर्धाधिकसख्याका इति व्यवह्रियते । तत्र किमिदमर्धत्वविशिष्टन्यूनत्वार्धत्वविशिष्टाधिकत्व वेति प्राप्ते अभिधीयते । **समव्याप्यव्यापकत्वे यतः** सख्यात्वव्याप्यतादृशरूपाभ्या **निरूप्येते** अवच्छिद्येते । **तद्वत्त्वरूपे** तादृशव्याप्यत्वव्यापकतावच्छेदकधर्मवत्त्वरूपे **अर्धत्वेन विशेषिते** अर्धन्यूनत्वाधिकत्वे स्यातामित्यक्षरार्थ । अयमर्थ । तद्धर्मावच्छिन्नपर्याप्तसख्यार्धन्यूनत्वन्नाम तद्धर्मावच्छिन्नपर्याप्तसख्यासमव्याप्यतावच्छेदकधर्मवत्त्वम् । तच्च तद्धर्मावच्छिन्नपर्याप्तसख्यापर्याप्त्यवच्छेदकधर्मसमानाधिकरणो यो धर्म स्वावच्छिन्नपर्याप्तिनिरूपकतावच्छेदकत्वस्वाधिकरणधर्मावच्छिन्नपर्याप्तसख्यापर्याप्त्यवच्छेदकधर्माधिकरणमात्रवृत्तिधर्मावच्छिन्नपर्याप्तिनिरूपकतावच्छेदकत्वोभयसबन्धेन तद्विशिष्टसख्यात्वव्याप्यधर्मवत्त्वम् । दशघटपर्याप्तदशत्वसख्यापर्याप्त्यवच्छेदकदशघटान्यतमत्वसमानाधिकरणो य पञ्चघटान्यतमत्वरूपो धर्म तदवच्छिन्नपर्याप्तिनिरूपकतावच्छेदकत्वस्य पञ्चत्वे सत्त्वात्तादृशोभयसबन्धेन तावद्घटान्यतमत्वावच्छिन्नपर्याप्तसख्यापर्याप्त्यवच्छेदकधर्मसमानाधिकरणधर्मविशिष्टो य पञ्चत्वत्वरूपो सख्यात्वव्याप्यधर्म, तद्वच्छिन्नसख्यापर्याप्त्यधिकरणत्वस्य पञ्चपटेषु सत्त्वान्नानुपपत्ति । एव तद्धर्मावच्छिन्नसख्याधाधिकत्वन्नाम तद्धर्मावच्छिन्नपर्याप्तसख्यासमव्यापकतावच्छेदकसख्यात्व

व्याप्यधर्मवत्त्वम् । तच्च स्वाधिकरणस्वभिन्नस्वावच्छिन्नपर्याप्तिनिरूपकतावच्छेदकतद्धर्मान्-
च्छिन्नपर्याप्तसख्यानिष्ठसख्यात्वव्याप्यधर्मावच्छिन्ननिरूपितपर्याप्त्यनवच्छेदकयत्किंचिद्धर्माधि-
करणैतदुभयमात्रवृत्तित्वसम्बन्धेन यत्किंचिद्धर्मविशिष्टधर्मावच्छिन्नपर्याप्तिनिरूपकतानवच्छेदकस-
ख्यात्वव्याप्यधर्मवत्त्वम् । स्व पञ्चघटान्यतमत्वम् । तदवच्छिन्नपर्याप्तिनिरूपकतावच्छे-
दकत्वम् पञ्चनिष्ठपञ्चत्वसख्यावृत्तिपञ्चत्वत्वस्यास्ति । पञ्चत्वत्वस्य सर्वत्रैकत्वात् ।
तदवच्छिन्ननिरूपितपर्याप्त्यनवच्छेदकधर्मं प्रागुक्तपञ्चघटव्यतिरिक्तपञ्चघटमात्रनिष्ठतावद-
न्यतमत्वमपि । एव च स्वाधिकरणे स्वभिन्नतादृशधर्माधिकरणेचैतदुभयमात्रे
वृत्तित्वम् दशघटान्यतमत्वस्येति निरुक्तसम्बन्धेन यत्किंचिद्धर्मविशिष्टधर्मो दशघटान्यतम
त्वम् । तदवच्छिन्नपर्याप्तिनिरूपकतावच्छेदकीभूतो यो दशत्वरूपसख्यात्वव्याप्यधर्मस्त-
दवच्छिन्नसख्यापर्याप्त्यधिकरणत्वस्य दशघटेषु विद्यमानत्वान्नानुपपत्तिरित्यादिक सुदूरतर-
मालोचनीयम् ॥ २६ ॥

मू० गुणादौ द्वित्वमेकत्वमथ द्वित्वादिकं पुनः ।
तद्वृत्तित्वविशिष्टान्यतरत्वादि प्रकीर्तितम् ॥ २७ ॥
द्वौ वा त्रयो वा चत्वारो भेदा यत्र निवेशिताः ।
द्वित्वत्रित्वचतुष्ट्वादिसंज्ञास्तेषां प्रकीर्तिताः ॥ २८ ॥

ननु गुणादावयमेक इत्यादिशब्द प्रयुज्यते । तत्रैकशब्दस्य कोऽर्थ । न तावदे
कत्वसख्याविशिष्ट, गुणे गुणानङ्गीकारात् । अथ सामानाधिकरण्यसबन्धेनैकत्वसख्या-
विशिष्ट एव एकशब्दार्थ, घटनिष्ठैकत्वसख्याया सामानाधिकरण्यसबन्धेन घटरूपे
सत्त्वादेकमिदमिति प्रयोगोपपत्ति । अथ सामानाधिकरण्यसबन्धेन सख्याविशिष्टस्या-
प्येकशब्दार्थत्वे इमौ रूपरसावेक इति प्रयोगापत्ति । एतद्रूपरसयोरुभयोरपि सामाना
धिकरण्यसबन्धेनैकत्वसत्त्वादिति चेन्न । प्रत्येक वर्तमानसामानाधिकरण्यस्यैव वृत्तिनि-
यामकत्वस्वीकारात् । फलानुरोधित्वात्कल्पनाया । यथा स्फटिके लोहितप्रतीत्या स्फटिक-
निष्ठलौहित्यसामानाधिकरण्यस्यैव सबन्धता न तु भूतलादिनिष्ठसामानाधिकरण्यस्येति ।
अथ प्रत्येकवृत्तिलौहित्यसामानाधिकरण्यमादाय यथेमौ स्फटिकौ लोहितावित्यकमेव जपानु-

सख्यान्यूनसख्याकसख्यावन्ति पार्थिवानीति बोध । द्रव्यत्वावच्छिन्नेषु प्रत्येक समवेता यावत्य एकत्वादिसख्या तावन्न्यूनसख्याकत्वस्य पार्थिवत्वावच्छिन्नसमवेतसख्यासु विद्यमानत्वान्नानुपपत्ति । एव पार्थिवत्वावच्छिन्नसमवेतसख्याधिकसख्याकसख्यावन्ति द्रव्याणीत्येव पार्थिवान्यपेक्ष्य द्रव्याण्यधिकसख्याकानीत्यत्र बोध इति न कदाचिदनुपपत्तिरिति वदन्ति । तन्मतमनेन दूष्यते। पार्थिवत्वावच्छिन्नसमवेतसम्यानिष्ठसख्याया द्रव्यत्वावच्छिन्नसमवेतसख्यानिष्ठसख्यान्यूनत्वस्यापि तन्न्यूनसख्याकत्वरूपस्य, द्रव्यत्वावच्छिन्नसमवेतसख्यानिष्ठसख्याया पार्थिवत्वावच्छिन्नसमवेतसख्याधिकत्वस्य च तदधिकसख्याकत्वरूपस्यैव निर्वाच्यतया आत्माश्रयप्रसङ्गात् । अनवस्थापत्तेश्च । यदि च तत्र न्यूनत्वाधिकत्वे अन्यथा निरुच्यते तर्हि प्रकृत एव तथा निरुच्येता । किं तावत्पर्यन्ताक्रमणेनेत्यर्थ ॥ २४ ॥

मू० व्याप्यव्यापकते याभ्यां निरूप्येते विशेषतः ।
तद्रूपवत्त्वरूपे तु ते स्यातामिति मन्महे ॥ २५ ॥

तद्रूपावच्छिन्नपर्याप्तसख्यानिष्ठसख्यात्वव्याप्यधर्मावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नव्यापकतानिरूपितपर्याप्तिसम्बन्धावच्छिन्नव्याप्यत्वम् । तद्रूपावच्छिन्नपर्याप्तसख्यानिष्ठसख्यात्वव्याप्यधर्मावच्छिन्नव्याप्यतानिरूपितपर्याप्तिसम्बन्धावच्छिन्नव्यापकत्व च । विशेषत सख्यात्वव्याप्यव्यापकरूपाभ्या याभ्यां धर्माभ्यां निरूप्येते अवच्छिद्येते । तद्रूपवत्त्वरूपे तादृशव्याप्यतावच्छेदकव्यापकतावच्छेदकधर्मवत्त्वरूपे ते सख्यानिष्ठन्यूनत्वाधिकत्वे स्यातामित्यक्षरार्थ । द्रव्याण्यपेक्ष्य पार्थिवानि न्यूनसंख्याकानीत्यत्र द्रव्यत्वावच्छिन्नपर्याप्तसख्यानिष्ठसख्यात्वव्याप्यधर्मावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नव्यापकतानिरूपितपर्याप्तिसम्बन्धावच्छिन्नव्याप्यतावच्छेदकसख्यात्वव्याप्यधर्मावच्छिन्नसख्यापर्याप्त्यधिकरणानि पार्थिवानीत्यन्वयबोध । पार्थिवान्यपेक्ष्य द्रव्याण्यधिकसख्याकानीत्यत्र तु पार्थिवत्वावच्छिन्नपर्याप्तसख्यानिष्ठसख्यात्वव्याप्यधर्मावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नव्याप्यतानिरूपितपर्याप्तिसम्बन्धावच्छिन्नव्यापकतावच्छेदकसख्यात्वव्याप्यधर्मावच्छिन्नसख्यापर्याप्त्यधिकरणानि द्रव्याणीत्यन्वयबोध । एव च यत्र भूतले दश घटा सन्ति पटाश्च षट् तत्रैतान् घटानपेक्ष्य एते पटा न्यूनसख्याका , एतान् पटा

नपेक्ष्य एते घटा अधिकसंख्याका इति व्यवहारश्चोपपद्यते । एवं तद्धर्मावच्छिन्नपर्याप्तिसंख्यानिष्ठसंख्यात्वव्याप्यधर्मावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नव्यापकतानिरूपितपर्याप्तिसम्बन्धावच्छिन्नव्याप्यतानवच्छेदकत्वं नाम, तद्धर्मावच्छिन्नपर्याप्तिसंख्यापर्याप्त्यवच्छेदकधर्मसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदको यो धर्मः तदवच्छिन्नपर्याप्तिसंख्यापर्याप्त्यवच्छेदकधर्माधिकरणमात्रवृत्ति, तदवच्छिन्नपर्याप्तिनिरूपकतावच्छेदकत्वम् । तावद्घटत्वावच्छिन्नपर्याप्ता या दशत्वसंख्या तत्पर्याप्त्यवच्छेदकीभूतो यस्तावद्घटान्यतमत्वरूपो धर्मः तत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकः तादृशधर्माधिकरणमात्रवृत्तिश्च षड्घटान्यत्वरूपो धर्मः, तदवच्छिन्नपर्याप्तिनिरूपकतावच्छेदकं षट्त्वरूपसंख्यात्वव्याप्यधर्मं तदवच्छिन्नसंख्यापर्याप्त्यधिकरणत्वं षण्णां घटानामस्तीति नैतान् घटानपेक्ष्य एते घटा न्यूनसंख्याका इति प्रयोगानुपपत्तिः । एवं तद्धर्मावच्छिन्नपर्याप्तिसंख्यानिष्ठसंख्यात्वव्याप्यधर्मावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नव्याप्यतानिरूपितपर्याप्तिसम्बन्धावच्छिन्नव्यापकतावच्छेदकत्वं नाम, तद्धर्मावच्छिन्नपर्याप्तिसंख्यापर्याप्त्यवच्छेदकधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावसमानाधिकरणो यः, तद्धर्मावच्छिन्नपर्याप्तिसंख्यापर्याप्त्यवच्छेदकधर्मसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकस्तदवच्छिन्नपर्याप्तिनिरूपकतावच्छेदकत्वम् । षट्पटनिष्ठा या षट्त्वसंख्या तत्पर्याप्त्यवच्छेदकीभूतो यः पटपटान्यतमत्वरूपो धर्मः तदवच्छिन्नप्रतियोगिताकान्योन्याभावसमानाधिकरणतद्धर्मसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकश्च तावत्पटेतरचतुर्व्यक्तितदन्यतमत्वरूपो धर्मः, तदवच्छिन्नपर्याप्तिनिरूपकतावच्छेदकीभूतो यो दशत्वरूपसंख्यात्वव्याप्यधर्मः तदवच्छिन्नसंख्यापर्याप्त्यधिकरणत्वस्य दशघटेषु विद्यमानत्वान्नैतान् पटानपेक्ष्यैते घटा अधिकसंख्याका इति प्रयोगानुपपत्तिरिति सर्वं समञ्जसम् । अथैतच्छास्त्रप्रयारोहो निरर्थकः । सर्वत्र न्यूनत्वमपकर्षः, अधिकत्वमुत्कर्षः षट्पटनिष्ठबहुत्वसंख्यापेक्षया दशघटनिष्ठबहुत्वसंख्याया उत्कर्षस्य, दशघटनिष्ठबहुत्वसंख्यापेक्षया षट्पटनिष्ठबहुत्वसंख्यायामपकर्षस्य च सकलानुभवसिद्धत्वात् । नच त्र्याद्यपेक्षया एकस्य द्वयोश्च न्यूनसंख्याकत्वं न स्यादिति वाच्यम् । एकत्वे द्वित्वसंख्यायां च बहुत्वत्वशून्यत्वस्यैव न्यूनत्वरूपत्वात् । नचैव द्व्याद्यपेक्षयैकस्मिन् न्यूनसंख्याकत्वं न स्यादितिवाच्यम् । तत्रैकत्वसंख्यायामनेकत्वत्वशून्यत्वस्यैव न्यूनत्वरूपत्वादिति चेन्न । अननुगमापत्तेः । किञ्च इदमस्माद्बहुतर

ण्यविशेषणत्वैतदुभयघटितसामानाधिकरण्यं क्वचित्तु समवायकालिकविशेषणत्वोभयघटित सामानाधिकरण्यमित्यादिनानासम्बन्धानां सम्बन्धत्वाङ्गीकारे गौरवमिति चेन्न। न हि तावत्सम्बन्धानां तत्तत्सम्बन्धत्वेन सम्बन्धता स्वीक्रियते येन गौरवं स्यात्। किन्तु समवायस्यैकसम्बन्धता। सामानाधिकरण्यानां तु सर्वेषां सामानाधिकरण्यत्वेनापरसम्बन्धते त्याशयेन गौरवाभावात्। अथैवं रूपरसगन्धस्पर्शसंख्यापरिमाणसंयोगेति विभागवाक्ये रूपमेकं रस एकः गन्ध एकः स्पर्श एक एव क्रमेण सर्वैरपि विद्वद्भिः शिष्याणां बोधनं क्रियते। तत्रैकपदस्य का गतिः। नच तत्र रूपत्वावच्छिन्नं यदेकत्वसामानाधिकरण्यं तदेव सम्बन्धतया स्वीकार्यमिति वाच्यम्। तथा सति यत्र रूपत्वेन रूपेण घटपटकुड्यतु सूलादिनानापदार्थगतनानारूपाणि विषयीकृत्य रूपाण्येकमिति प्रयुज्यते। तदा तादृशवाक्यस्य प्रामाण्यापत्तेरिति। नेष दोषः। तत्रैकपदस्यैकधर्मावच्छिन्नार्थकत्वात्। स च धर्मो रूपत्वं रूपत्वनिष्ठ यदेकत्वसामानाधिकरण्यघटितं सामानाधिकरण्यं तस्यैकं रूपत्वमिति प्रतीत्यनुरोधेन सम्बन्धताया स्वीकर्तव्यतया रूपत्वस्यैकत्ववत्त्वेऽविवादात्। तदेतत्सर्वमभिप्रेत्य एकार्थसमवायादिनैव तादृशव्यवहारोपपत्तेः गुणे गुणानङ्गीकारादिति दीपिकायां स्थितमिति चेन्न। एतद्घटरूपमेकमिति वाक्यजन्यप्रतीतौ यथैतद्घटरूपत्वावच्छिन्नसामानाधिकरण्यसम्बन्धेनैतद्घटनिष्ठैकत्वविशिष्टमेवावभासते। तदैकस्मिन् घटे द्वे रूपे उत्पन्ने इत्याद्यभिदधानं पुमांसं प्रति एतद्घटवृत्तिरूपमेकमिति वाक्यं न प्रयुञ्जीरन्। न हि ततो जायमाना धीस्तथाविधसंशयं निवर्तयितुमाष्टे। परिभावयतु तावदिदं स्वयमेव नयने निमील्य मनसा अन्नमट्ट घटे वर्तमानं रूपं तद्वृत्त्येकत्ववत्त्वेन विदानोऽपि कश्चित्पुमान् अस्मिन् रूपान्तरोत्पत्तिं संशेते न वेति। एवं रूपत्वादावेकत्वादिसामानाधिकरण्यज्ञानेऽपि रूपत्वान्तरसंभावनाविरोधाभावाद्रूपत्वान्तरं संदिहानं प्रति एकं रूपत्वमिति प्रयोगानुपपत्तिरिति। न हि रूपत्वमेकत्वसमानाधिकरणतया अजानानो रूपत्वान्तरसंभवं किमिति संदिग्धे। तस्मादनुभवविरोधादन्नभट्टवचनमनादरणीयम्। यथैतद्घटवृत्ति रूपमेकमित्यस्य भिन्नरूपासमानाधिकरणमित्यर्थः रूपत्वमेकमित्यस्य स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणरूपत्वकमित्यर्थः। तथाप्येकं रूपं ज्ञातं एकं रूपं जानामीत्यादावेकपदं तद्व्यक्तित्वावच्छिन्नपरमावश्यकम्। न हि तत्र स्वभिन्नरूपासमानाधिकरणत्व

ण्यविशेषणत्वैतदुभयघटितसामानाधिकरण्य क्वचित्तु समवायकालिकविशेषणतोभयघटित-
सामानाधिकरण्यमित्यादिनानासम्बन्धाना सम्बन्धत्वाङ्गीकारे गौरवमिति चेन्न। न हि
तावत्सम्बन्धाना तत्तत्सम्बन्धत्वेन सम्बन्धता स्वीक्रियते येन गौरवं स्यात्। किन्तु सम-
वायस्यैकसम्बन्धता। सामानाधिकरण्याना तु सर्वेषा सामानाधिकरण्यत्वेनापरसम्बन्धते
त्याशयेन गौरवाभावात्। अथैव रूपरसगन्धस्पर्शसख्यापरिमाणसयोगेति विभागवाक्ये
रूपमेक रस एक गन्ध एक स्पर्श एक एव क्रमेण सर्वैरपि विद्वद्भि शिष्याणा बोधन
क्रियते। तत्रैकपदस्य का गति। नच तत्र रूपत्वावच्छिन्न यदेकत्वसामानाधिकरण्य
तदेव सम्बन्धतया स्वीकार्यमिति वाच्यम्। तथा सति यत्र रूपत्वेन रूपेण घटपटकुड्यकु-
सूलादिनानापदार्थगतनानारूपाणि विषयीकृत्य रूपाण्येकमिति प्रयुज्यते। तदा तादृशवा-
क्यस्य प्रामाण्यापत्तेरिति। नैष दोष। तत्रैकपदस्यैकधर्मावच्छिन्नार्थकत्वात्। स च धर्मो रूपत्व
रूपत्वनिष्ठ यदेकत्वसामानाधिकरण्यघटित सामानाधिकरण्य तस्यैक रूपत्वमिति प्रतीत्यनु
रोधेन सम्बन्धताया स्वीकर्तव्यतया रूपत्वस्यैकत्ववत्त्वेऽविवादात्। तदेतत्सर्वमभिप्रेत्य
एकार्थसमवायादिनैव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारादिति दीपिकाया स्थित-
मिति चेन्न। एतद्घटरूपमेकमिति वाक्यजन्यप्रतीतौ यद्येतद्घटरूपत्वावच्छिन्नसामानाधि-
करण्यसम्बन्धेनैतद्घटनिष्ठैकत्वविशिष्टमेवावभासते। तदैकस्मिन् घटे द्वे रूपे उत्पन्ने
इत्याद्यभिदधान पुमास प्रति एतद्घटवृत्तिरूपमेकमिति वाक्य न प्रयुञ्जीरन्। न हि
ततो जायमाना धीस्तथाविधसशय निवर्तयितुमीष्टे। परिभावयतु तावदिद स्वयमेव
नयने निमील्य मनसा अन्नभट्ट घटे वर्तमान रूप तद्वृत्त्येकत्ववत्त्वेन विदानोऽपि कश्चि
त्पुमान् अस्मिन् रूपान्तरोत्पत्ति सशेते न वेति। एव रूपत्वादावेकत्वादिसामानाधि
करण्यज्ञानेऽपि रूपत्वान्तरसभावनाविरोधाभावाद्रूपत्वान्तर सदिहान प्रति एक रूपत्वमिति
प्रयोगानुपपत्तिरिति। न हि रूपत्वमेकत्वसमानाधिकरणतया अजानानो रूपत्वान्तरसभवं
किमिति सदिग्धे। तस्मादनुभवविरोधादन्नभट्टवचनमनादरणीयम्। यद्येतद्घटवृत्ति
रूपमेकमित्यस्य भिन्नरूपासमानाधिकरणमित्यर्थ रूपत्वमेकमित्यस्य स्वाश्रयप्रतियोगिका-
न्योन्याभावासमानाधिकरणरूपत्ववकमित्यर्थ। तथाप्येक रूप ज्ञात एक रूप जानामी
त्यादावेकपद तद्व्यक्तित्वावच्छिन्नपरमावश्यकम्। न हि तत्र स्वभिन्नरूपासमानाधिकरणत्व-

रूपमेकत्व विषय रूपान्तरस्यापि तद्भूतले तदानीं सत्त्वात्। ज्ञानमात्रत्वेकरूपस्यैवेति। एकस्मिन् घटे द्वे रूपे उत्पन्ने एक शुक्लमपर नीलमित्यत्रैकपदस्य तद्व्यक्तित्वावच्छिन्नार्थ कत्वमावश्यकमिति सर्वत्रैव तथास्त्वित्याशयेनाह **गुणादावि**ति। गुणादिनिष्ठ यदेकत्व तत्तद्व्यक्तित्वादिरूपमित्यर्थ। ननु यत्र रूपमेक रस एक उत्पन्न इत्यत्रेमौ रूपरसौ द्वाविति सर्वैर्व्यवह्रियते। तत्र किमद द्वित्व न तावत्सख्यारूप गुणादौ तदसभवात्। आश्रयगतद्वित्वादिभानन्तु पूर्ववदेव निरसनीयम्। अथापेक्षाबुद्धिविशेषविषयत्वमेव द्वित्वमिति चेन्। विषयताया व्यासज्यवृत्तित्वे मानाभावेन प्रत्येकमपि द्वित्वादिप्रत्ययापत्ति। अत आह **द्वित्वादिकं पुनरित्यादि। तत्तदिति।** यादृशव्यक्तीना द्वित्वादिक वक्तव्य तत्तद्व्यक्तिवृत्तित्वविशिष्टतावदन्यतरत्वादिकमेवेत्यर्थ। अय भाव। यत्र रूपरसौ द्वाविति प्रयुज्यते तत्रैतद्रूपरसवृत्तित्वविशिष्टैतद्रूपरसान्यतरत्वावच्छिन्नत्व द्वित्वमिति यत्रैतद्रूपरसस्प र्शास्त्रय इति प्रयुज्यते तत्रैतद्रूपरसस्पर्शवृत्तित्वविशिष्टतावदन्यतमत्वावच्छिन्नत्व त्रित्वमिति सङ्क्षेपादिक स्वयमूहनीयम्॥ २८॥

मू० **वैलक्षण्ये भवेत् यद्वापदमप्यथवेति च।**
**परन्त्वपितुकिन्तूनां वैलक्षण्यमुदीरितम्॥ २९॥**

**विरुद्धत्वं च भिन्नत्वं वैलक्षण्य द्विधा मतम्।**
**विरोधिज्ञानविषया विकल्पोत्तरसप्तमी॥ ३०॥**

प्रथमस्योदाहरण यथा न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम् तादृशे प्रमाणाभावादित्यनन्तर, अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्व तदिति। तादृशे प्रमाणाभावादित्यत्र तादृश इत्यनन्तर शरीर इति पूरणीयम्। शरीर इत्यत्र सप्तम्यर्थो विशेष्यत्वम्। तादृशपद चेष्टानधिकरणत्वपर, प्रकारित्व सप्तम्यर्थ। तथाच शरीरविशेष्यकचेष्टानधिकरणत्वप्रकारकप्रमाकरणाभावज्ञानज्ञाप्याप्रामाण्याश्रयीभूत तादृश वाक्यमित्यन्वयबोध। अथ तादृशप्रमाणविरहज्ञानज्ञाप्याव्याप्तिविरहक शरीरलक्षणमिति सामान्यत शरीरलक्षणत्वावच्छिन्नविशेष्यकमानसबोधो जायते। अथवेत्यनेन पूर्वोक्ता

र्थवैलक्षण्यं प्रतिपाद्यते । पूर्वोक्तार्थबोधोत्तरतादृशमानसज्ञानविषयीभूताव्याप्तिविरहज्ञाप-कातिरिक्तज्ञापकज्ञाप्याव्याप्तिविरहकत्वं तत् । अन्वयश्चास्य तत्पदार्थे शरीरलक्षणत्वाव-च्छिन्ने । यद्वा पूर्वोक्तचेष्टाधिकरणत्वलक्षणभिन्नत्वमर्थ । तस्यापि तत्पदार्थे अन्वय इति ॥ द्वितीयस्योदाहरणम् । न हि दृश्यत्वमदृश्यत्वं वा कस्य चित्स्वभावादाच-क्ष्महे । परन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद्दृश्यत्वं तदभावे चादृश्यत्वमिति । अत्र स्वभावादित्यनन्तरमितिशब्द पूरणीय । तथा ऽदृश्यत्वमित्यनन्तरमपि । अत्र परन्तुशब्देन पूर्वोक्तिवैलक्षण्यमुत्तरोक्तौ प्रतीयते । तच्च तद्विरुद्धार्थकत्वमिति ॥ तृतीयस्यार्थ विकल्पसूचकपदादुत्तरा या सप्तमी सा विरोधिज्ञान विषय स्वप्रतिपाद्य यस्या सा तथा उदाहरणञ्चास्य—तस्य नित्यत्वे भूतले घटाभावबुद्धिप्रसङ्गादिति । अत्र तत्पदमभाव-वैशिष्ट्यपरम् । विशेष्यत्व षष्ठ्यर्थ । नित्यत्वपद नित्यत्वज्ञानपरम् । विरोधिज्ञानविष-यत्व सप्तम्यर्थ । घटानयनानन्तरमपीत्यपिशब्दस्वारस्यात्त्वाव्यवहितोत्तरघटाभावोत्तरकाली-नत्व सूच्यते । तथाचाभाववैशिष्ट्यविशेष्यकनित्यत्वप्रकारकज्ञानविरोधिज्ञानविषयो यो घटानयनोत्तरकालीनघटाभावबुद्धिप्रसङ्गस्तस्मादित्यर्थ ॥ ३० ॥

मू० ज्ञानज्ञाप्यत्वविषया सेति कश्चित्प्रचक्षते ।
समानयुक्तिकत्वार्था क्वचिदेषा विलोक्यते ॥ ३१ ॥

अत्र प्रथमस्योदाहरणम् इदमेव पूर्वोक्त । तस्येत्यत्र षष्ठ्यर्थो विशेष्यत्वम् । नित्यत्व पद नित्यत्वज्ञानपरम् । ज्ञाप्यत्व सप्तम्यर्थ । तस्य प्रसङ्गेऽन्वय । ज्ञान च सभाव नात्मक बोध्यम् । ज्ञायते हि तस्य नित्यत्व सभावयतो यथोक्तातिप्रसङ्ग इति । द्वितीय स्योदाहरणम्—समवायस्यातिरिक्तत्वे अभावस्यापि वैशिष्ट्य सबन्धान्तर सिद्ध्येदिति । अत्र समवायस्येत्यत्र षष्ठ्यर्थो विशेष्यत्व, अतिरिक्तत्वपदमतिरिक्तत्वसिद्धिपरम् । समा-नयुक्तिकत्व सप्तम्यर्थ । तच्च स्वजनकसमानजनकत्व स्व समवायातिरिक्तत्वसिद्धि तज्ज नक यल्लाघवज्ञानं तत्समानजनककत्व संबन्धान्तरत्वप्रकारकसिद्धेरिति अत्रापि लाघवज्ञान-सभवादितिभाव । यदि चात्र सिद्ध्येदित्यत्र स्यादिति प्रयुज्यते तदा समवायस्येत्यत्र

पष्ठ्यर्थो निष्ठत्वम्। अतिरिक्तत्वपद यथाश्रुतार्थकमेव। समानयुक्तिकत्वं मतम्पर्थ। तच्च स्वज्ञापकज्ञाप्यत्वम्। अन्वयश्चास्य सम्बन्धान्तरघटकमेद इत्यवमेयम् ॥ ३१ ॥

म० अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ॥ ३२ ॥

व्यतिरेचको निपात एवकार क्वचिदयोग व्यवच्छिनत्ति अयोग व्यवच्छेदबोध जनयति। अयोग उद्देश्यतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वम्। तस्य व्यवच्छेदोऽभाव व्यापकत्वमिति यावत्। यथा अय शङ्ख पाण्डुर एवेति विशेषणसङ्गतैवकारेण शङ्खत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभाव पाण्डुरत्वे बोध्यते। क्वचिदत्यन्तायोग व्यवच्छिनत्ति अत्यन्तायोगव्यवच्छेदबोध जनयति। अत्यन्त उद्देश्यतावच्छेदकव्यापको योऽयोग अभाव तद्व्यवच्छेद तदप्रतियोगित्वम्। यथा सरोज नील भवत्येवेत्यादा क्रियासङ्गतैवकारस्थले सरोजत्वव्यापकात्यन्ताभावाप्रतियोगित्व नीलभवनरूपधात्वर्थे बोध्यते। क्वचिदपरयोग व्यवच्छिनत्ति अपरयोग व्यवच्छेदबोध जनयति। अपरैर्विशेष्यान्यैर्यो योगस्तादात्म्यादिसम्बन्ध तद्व्यवच्छेदस्तदभाव। यथा पार्थ एव धनुर्धर इत्यादौ विशेष्यसङ्गतैवकारस्थले पार्थान्यतादात्म्याभावो धनुर्धरे बोध्यत इत्यादि यद्यपि बहु वक्तव्यम्। तथापि ग्रन्थान्तरेषु बहुश प्रपञ्चितत्वात् विस्तरभयाच्च विरम्यते ॥ ३२ ॥

श्रीत्रिंशच्छ्लोकीटीका सेय पट्टाभिरामेण।
क्षिप्ता वक्षसि साक्षात् कौसुममालेव दक्षिणामूर्ते ॥
पट्टाभिरामपोतप्रथिता सेय प्रसूनमालेव।
त्रिंशच्छ्लोकीटीका प्रियता पुरसुन्दरी देवी ॥

शुभमस्तु

इति तार्किकचूडामणिपट्टाभिरामशास्त्रिकृता त्रिंशच्छ्लोकीटीका समाप्ता
॥ समाप्तोऽयं ग्रन्थ ॥